THE

PRINCESS OF WALES

# SARASVATĪ BHAVANA TEXTS

*No. 74*

PART I.

—o—

EDITED BY
MANGAL DEVA SASTRI,
M. A., D. PHIL. (OXON.),
PRINCIPAL,
GOVT. SANSKRIT COLLEGE, BENARES

---

THE

# ĀS'VALĀYANA S'RAUTA SŪTRA

WITH SIDDHĀNTI-BHĀṢYA

PART I

*Printed by Jai Krishna Das Gupta*
*Vidya Vilas Press, Benares City.*

---

1938

# आश्वलायनश्रौतसूत्रम्

## सिद्धान्तिभाष्यसहितम्

[ प्रथमो भागः ]



THE

# ĀS'VALĀYANA S'RAUTA SŪTRA

WITH

THE COMMENTARY OF SIDDHĀNTIN

EDITED FOR THE FIRST TIME FROM

ORIGINAL MANUSCRIPTS, WITH INTRODUCTION.

CRITICAL NOTES, SEVERAL APPENDICES AND INDICES

BY

MANGAL DEVA SHASTRI,

M. A., D. Phil. ( OXON. ),

PRINCIPAL

GOVT. SANSKRIT COLLEGE,

BENARES.



PART I.

1938.

# PREFACE.

This edition of the Ās′valāyana–s′rauta–sūtra with the commentary called Siddhānti–Bhāṣya is based on three manuscripts, respectively named B[1],B[2],B[3], all belonging to the Government Sanskrit College Library, Sarasvatī Bhavana, Benares. A brief description of the manuscripts is as follows:—

B[1] = No. 131 of "Ati-prācīna Dhundi Raj Collection" of the Sanskrit College Library. I tbegins on folio 1b:– श्रीगणाधिपतये नमः । श्रीमत्श्रीजगन्नाथाश्रमश्रीचरणारविन्दाभ्यां नमः । अथै-तस्य etc. Folios: 1–88,91–159, 21–36, 36–137 (First Part ends); 1–37, 37–38, 38–110 (Second Part ends). Size: 9″ × 4″. Lines per page: 9–10 in Part I, and 7 in Part II which is written in a different hand. Letters in a line : 27–38. Date: not given. The manuscript in Part I seems to have been carefully read and corrected. It is written in a clear and fair hand.

B[2] = A newly-acquired MS. of the Sanskrit College Library, Benares. A complete manuscript with 1–248 leaves. Size : 10″ × 4″. Lines per page : 11–13. Letters per line : 36–51. A new handwriting appears from falio 27b. Date : Samvat 1795. Written in a fair hand but full of mistakes.

B³ = No. 42 of the "Atipracīna Collection" of the Sanskrit College Library, Benares. An incomplete manuscript ending abruptly after a few Sūtras of Adhyāya IV, Part I. Folios: 1, 3–31, 1 (unnumbered), 34–38, 42–126, 146–148. Size: 9″ × 4.3″. Lines per page: 9–13. Letters per line: 30–44. Date: not given. Written in a fair hand but full of mistakes.

It is enough to give here only these brief details regarding the manuscripts used for this edition. Their detailed description as well as my remarks as to their mutual relation I reserve for the main Introduction of the work to be given with the last Vol. of this big work.

A glance into the commentary will show that the author does not comment on all the Sūtras of the Ā. S′. Sūtra. Nor does he attempt to explain every word of even those Sūtras on which he comments. Like some of the old important Bhāṣyas, his comments are only on important words of the Sūtras or on topics suggested by the words of the Sūtras; though he often quotes, in the course of his commentary, even those Sūtras of the work which he dose not explain at all. Thus it was difficult to constitute any Sūtra Text solely on the authority of the commentary. The difficulty was augmented all the more by the tact that all the three manuscripts used by me give the Sūtras commented upon

by the commentary only in abbreviated form, e. g. अथै० क्ष्यामः for अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः. Thus for constituting the Sūtra Text I had to rely on the manuscripts of the text only as well as on the text given in the Calcutta ( Bibliotheca Indica Series ) and Poona ( Anandashram Series ) editions of the Ā. S'. Sūtra with the commentary of Nārāyaṇa. The critical apparatus for the Sūtra Text I propose to give in a separate volume by itself.

All Sūtras not commented upon in the commentary are printed within square brackets [ ]. The unit of a Sūtra is determined according to the commentary. Thus the numbering and division of the Sūtras as followed in this edition are often bound to be different from those of the Calcutta and Poona ( Sūtras are not numbered in this edition ) editions.

No reference for the Sūtras of the text, internally quoted by the commentary, has been given, as no numbering of the same can be assigned until the whole edition is finished. The reference however will be easily found out by the aid of the various indices to be given at the end of the work.

In spite of the unsatisfactory nature of the manuscript material, I have taken every care to canstitute as correct a

text of the commentary as possible. Both $B^2$ and $B^3$ being full of mistakes of various kinds, though in some cases also helpful in arriving at a correct and original reading, I have been careful in selecting only important variant readings for the foot-notes.

On the importance, the antiquity and the authorship of the commentary I need not say anything at this stage. It would be better to discuss all these points in the main Introduction.

Sarasvatī Bhavana,
Benares,
12. 7. 1938.

**M. D. SHASTRI**
PRINCIPAL,
Sanskrit College, Benares.

ओ३म्

अथ सिद्धान्तिभाष्यसहितम्

# आश्वलायनश्रौतसूत्रम् ।

**अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः ॥१॥**

अथेत्ययं निपातः शुभमङ्गलार्थः शास्त्रादौ प्रयुज्यते । "अकारो वै सर्वा वाक्" इति वचनात्, "अकारस्यावस्थया सर्वान्वर्णान्ब्रूयात्" (Cp. ऋ० प्रा० १४।६५) इति शिक्षायां वचनाच्चाकारस्य मङ्गलार्थत्वम् । तथा थकारस्याप्यकारोदयत्वान्मङ्गलभावः[1] ।

समाम्नायविशेषणार्थमेतस्येत्युच्यते । अस्ति कश्चित्समाम्नायविशेषोऽनेनाचार्येणाभिप्रेतः शाकलको वा बाष्कलको वा सह निवित्पुरोरुगादिभिस्तस्यैव परिग्रहः कथं (?=यथा) स्यान्न सर्वेषां समाम्नायानामिति । अथवा एतस्येत्यत्र वीप्सालोपो द्रष्टव्यः । एतस्यैतस्य समाम्नायस्येति । एवमृग्वेदसमाम्नायाः सर्वे परिगृहीता भवन्ति । तथा सत्येतस्येति वचनं वीप्सार्थमित्युक्तम् । तेन किं सिद्धं भवति । एकेनैव समाम्नायेन प्रारब्धं कर्म समापयेदिति । इतरथैत(?=क)स्मिन् यज्ञे[2] शाकलकेन किञ्चित्कर्म कृत्वा पुनः किंचिद्बा-

---

(१) मङ्गलार्थत्वमिति भावः ।

(२) B³, इतरथैतस्मिन् B¹, इतरस्मिन् यज्ञ B²

ष्कलकेन वान्येन वा कुर्यात् । तन्मा भूदिति । ताण्डकेऽपि वचनम् । "येनोपक्रमः स्यात्तेनान्तं गच्छेदेष प्रयोगाणां धर्मः" इति ।

अस्येति लघुना सिद्धेऽप्येतस्येति गुरुनिर्देशः समाम्नायपूजाकरणार्थम् । अथवा गुरुनिर्देशकरणं संहितासमाम्नायस्य परिग्रहणार्थम् । तेन किं सिद्धं भवति । वृषाकपौ न्यूङ्खे शस्यमाने "अमदद् वृषाकपिः" इत्यत्राकारलोपार्थम् । इतरथा पदसमाम्नायः परिगृहीत इति कृत्वा अकारलोपो न भवति । तन्मा भूदिति ।

समाम्नायस्येत्यृग्वेदस्य निर्देशः कृतः । उत्तरत्र "कर्मचोदनायां होतारम्" इति, "एतावत्सात्रं होतृकर्म" इति वचनाच्चेदमस्मिन् शास्त्रे विधीयमानं होतृकर्मेत्यवगम्यते । श्रुतौ च सिद्धम्[१]—ऋग्वेदेन होता करोतीति । तस्मादृग्वेदसमाम्नायस्येति सिद्धम् । किञ्चान्यत् । उत्तरत्र ऋचामादिग्रहणाद्यजुषां कृत्स्नशः पाठात्साम्नामनध्ययन[२] दर्शनाच्च । "यदि साम नाधीयात्" इति । तस्मादृग्वेदसमाम्नायस्य परिग्रह इति सिद्धम् ।

यज्ञे इति लघुना सुखज्ञेयेन शब्देन सिद्धेऽपि वितानवचनं सर्वेष्वग्निषु विहृतेष्वेव सर्वं कर्म कर्तव्यमित्येवमर्थम् । इतरथा "तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयात्" इत्यत्र प्रयोजनाभावाद्दक्षिणाग्नेर्विहरणं न स्यात् । "पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याम्" इत्यत्र पिण्डपितृयज्ञस्याहवनीयस्य च तन्मा भूदिति । तत्रापि विहृतेष्वेव कर्म कर्त्तव्यमित्येतदर्थम् ।

---

( १ ) B² B³, सिद्धे B¹.
( २ ) B³, साम्नामनध्ययनं B², साम्नामध्ययन B¹.

योगापत्तिः । योगस्यापत्तिर्योगापत्तिः । तां योगापत्तिमिति । अयमृग्वेदसमाम्नायः कचित्सामिधेनीसंज्ञं योगमापद्यते । कचिन्मरुत्वतीयसंज्ञम् । तां वक्ष्याम इति । तस्योत्तरत्र विधानादेव सिद्धेऽपीह योगापत्तिमिति वचनं नियमार्थम् । कथम् । योगः क्रम इत्यनर्थान्तरम् । अथवा योगः संघात इति । यथा "अथैतेषामह्नां योगविशेषान्वक्ष्यामः" इत्यत्र संघातविशेषादि(?=नि)ति । योगापत्तिमात्रमेव वक्ष्यामो नान्यं विकारमिति । तेन किं सिद्धं भवति । वक्ष्यति । "छन्दोगप्रत्ययं स्तोमस्तोत्रियः" इति । अत्र छन्दोगस्तोत्रीये त्वक्षरविपर्यासं पदविपर्यासं यदि कुर्युस्तत्रास्माभिरादरो न कर्त्तव्यः । ऋचामेव विपर्यास आदरः कर्त्तव्य इति नियम्यते । एतस्य विताने योगापत्तिमिति पदत्रयेण योऽर्थः साध्यते स एतस्मिन्ननारभ्यमाणो न लभ्यते । तस्मात्सूत्रारम्भः क्रियते ॥

अथास्य सूत्रस्यापरां योजनां वक्ष्यामः ।

अथशब्दः प्रतिज्ञार्थ इत्युच्यते । पूर्वेऽपि (?=हि) प्रत्यक्षदृशो मन्त्रब्राह्मणाभ्यामेव कर्माणि कृतवन्तः । तच्च पुनर्युगदौर्बल्यान्न शक्यते कर्तुम् । ततः शिष्यानुग्रहार्थं ग्रन्थारम्भं चिकीर्षुर्भगवानाश्वलायनः प्रतिज्ञातवान् । अथेति । एतस्येति चतुर्षु समाम्नायेषु विद्यमानेषु ऋग्वेदसमाम्नायो निर्दिश्यते । विताने न विहार[1] इत्यर्थः । योगश्चापत्तिश्च योगापत्तिः । तत्र योगो नाम ऋचां क्रमः । आपत्तिर्नामैकश्रुत्यादयो विकाराः । किञ्चान्यत् । "नमः प्रवक्त्रे" इत्यादिषु यजुष्षु भ्रेषे सत्यपि ऋग्भ्रेषप्रायश्चित्तस्यैव करणार्थमेतस्येति ऋग्वेद-

(१) B[1]. This passage is omitted in B[2] B[3].

परिग्रहः क्रियते । वितान इति "चात्वालं चात्वालवत्सु" इत्येवमादीनां दर्शपूर्णमासप्रकरणेऽकृतार्थानां वितान एव प्रयोग इत्यर्थं प्रतिज्ञायते ।

आह । यद्येवं सर्वमेतत्सूत्रमतिरिच्यते । कथम् । उत्तरत्र ऋग्वेदसमाम्नायस्यैव विधानदर्शनात् । दर्शपूर्णमासप्रकरणे यथा "प्र वो वाजा अभिद्यवोऽग्न आ याहि वीतये गृणानः" इति । तस्मादेतस्येति न वक्तव्यम् । तथैव "पश्चाद् गार्हपत्यस्योपविश्य", "प्रत्यगुदगाहवनीयादवस्थाय" इत्येवमादीनां दर्शनाद्वैतानिकमेवेदं कर्म विधीयत इत्येतदवगम्यते । तस्माद्वितानग्रहणं च न कर्तव्यम् । तथा सामिधेनीमरुत्वतीयादीनां योगानां तत्र तत्र योगविधानदर्शनादेव योगापत्तिर्विधीयत इत्यवगम्यते । तस्माद्योगापत्तिग्रहणं च न कर्तव्यमिति ।

तत्रोच्यते । सत्यम् । न वक्तव्यमेव । किन्तु प्रतिज्ञासूत्रमिदम् । अस्य सूत्रस्य विस्तर उत्तरः सर्वो विधिः । तस्मादुत्तरत्र दर्शनात् सिद्धानामप्यर्थानां प्रतिज्ञासूत्रे वचनं कर्तव्यम् । एवमन्येष्वपि शास्त्रेषु पूर्वमुद्देशं कृत्वा पश्चान्निर्देशः क्रियते । यथायुर्वेदे । अथातो दीर्घजीविके(?=की)यमध्यायं वक्ष्यामः" ( Cp. चरकसंहिता १।१ ) इति । अस्मिन्ननु[1]च्यमानेऽपि "दीर्घजीविकमिच्छन् भरद्वाजः शतक्रतुमुपावसत्" इत्युत्तरत्र वचनादेवावगम्यते दीर्घजीविकीयमिति । तथान्येषु शास्त्रेषु एवमेव प्रायेण कुर्वन्ति । तस्मात् सूत्रारम्भः क्रियते ॥

## अग्न्याधेयप्रभृतीन्याह वैतानिकानि ॥ २ ॥

---

( १ ) B², अस्मिन्नु-B¹, omitted in B³.

अग्न्याधेये कृते पश्चाद्वैतानिकानां कर्मणामधिकार इत्येतदर्थमेतदारभ्यते । इतरथा पुत्रे जाते "वैश्वानरं द्वादशकपालम्" इत्येवमादीनां[1] नैमित्तिकानामग्न्याधेयकरणात्पूर्वमुत्पन्नानामग्न्याधेये कृते पुनः क्रिया स्यात् । अथवा तदर्थमग्न्याधेयं कुर्यात् । तन्मा भूदिति सूत्रमारभ्यते । अथवाऽग्न्याधेयादनन्तरमेव[2] कथमग्निहोत्रहोमारम्भः स्यादित्येतदर्थमेतदारभ्यते । इतरथा "यद् द्वादशरात्रमजस्राः" इत्युक्त्वा पुनरग्निहोत्रविधानाद् द्वादशरात्रादूर्ध्वमेवाग्निहोत्रहोमारम्भः स्यात् । कस्मात् । विधिक्रमात् । तन्मा भूदिति । आहेति । क आह । श्रुतिराहेत्यर्थादध्याहारः क्रियते ॥

## दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामस्तन्त्रस्य तत्राम्नातत्वात् ॥ ३ ॥

यद्यपि वैतानिकान्यग्न्याधेयप्रभृतीनि श्रुतिराह । तथापि वयं तु दर्शपूर्णमासावेव पूर्वं व्याख्यास्यामः । कुतः । स्थानादिनिष्क्रमणान्तस्य वा, "नमः प्रवक्त्रे" इत्यादिसंस्थाजपान्तस्य वा तन्त्रस्य दर्शपूर्णमासयोराम्नातत्वात् । श्रुतौ दर्शपूर्णमासयोराम्नातत्वादिष्टीनां दर्शपूर्णमासौ प्रकृतिभूतौ भवतः । अन्या इष्टयो विकृतयो भवन्ति । यदि अग्न्याधेयं पूर्वं विधीयेत, अग्न्याधेये इष्टयोऽपि पूर्वं वक्तव्याः स्युः । तथा सति पूर्वं प्रकृतिमनुक्त्वा विकृतिविधानमन्याय्यम् ।

---

( १ ) B³, इत्येमादीनां B¹, इत्येवामदीनां B².

( २ ) अनन्तरमेव B² B³, अनन्तर B¹.

तस्माद्दर्शपूर्णमासावेव पूर्वं व्याख्यास्याम इत्येवं ब्रुवन्नाचार्यो ज्ञापयति यत्प्रथमं कर्तव्यं तदेव प्रथमं विधातव्यमिति । तस्मादन्यत्र विधानक्रमेणैव प्रयोगो भवतीति ।

इह तन्त्रस्य तत्राम्नातत्वादिति वचनादस्यैव तन्त्रस्य तन्त्रसंज्ञा भवतीति । तस्मात् "असमाम्नातास्वर्थात्तन्त्रविकारः" इत्यत्र दर्शपूर्णमासिकमेव तन्त्रं ग्राह्यम् । न सप्तदशसामिधेन्यादि वैकृतं तन्त्रमिति । कुतः । कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्यय इति ॥

**दर्शपूर्णमासयोर्हविःष्वासन्नेषु होतामन्त्रितः प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्धिहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीताः ॥ ४ ॥**

दर्शपूर्णमासाधिकारे पुनर्दर्शपूर्णमासग्रहणं कालविधानार्थमित्येके । दर्शपूर्णमासयोः पर्वणोरिति । दर्शस्य पूर्वनिपातनमल्पाच्तरत्वात् । पुनर्दर्शपूर्णमासग्रहणं स्थानाचमननियमार्थमित्येके । दर्शपूर्णमासयोरेव स्थानाचमने, न तदतिदिष्टेरिति[1] । वयं तु ब्रूमः । यत्र दार्शपौर्णमासिकतन्त्रमागच्छति तत्रैव स्थानाचमने भवतः, नाग्निहोत्रादिष्विति । अथवा अधिकारार्थं पुनर्दर्शपूर्णमासग्रहणम् । इतरथा पूर्वं दर्शपूर्णमासग्रहणमन्यार्थं कृतं तद्बलादनुवर्त्तमानं तावदेवानुवर्तेत यावन्न बाधकवचनम् । तथा सति "इन्द्राग्नी अमावास्यायाम्"

(१) B[1], तदतिदिष्टेष्विति B[2], तदतिदिष्टरिष्टेरिति B[3].

इत्यमावास्याधिकारादुत्तरः सर्वो विधिरमावास्यायामेव स्यात् । तन्मा भूत् । "पौर्णमास्याममा[1]वास्यायाम्" इति यदुक्तं तत्कथं तत्रैवोपतिष्ठेत । पुनरपि दर्शपूर्णमासयोरुभयोरप्यधिकारः कथं स्यादिति ।

होतृग्रहणं नियमार्थम् । होतुरेव स्थानाचमने नान्यस्येति । अवस्थायेति । यस्मादत(?=व)[2]पूर्वस्तिष्ठतीति चोद्यते तस्मान्न[3] स्थानविधानमेतत् । किं तर्ह्यवस्थाय परीक्ष्ये[4]त्यर्थः । एतावत्त्वं हविषामित्येवमादिषु पूर्वं ज्ञातेष्वपि यजमानस्य नामधेयप्रवरादिषु च पुनरध्वर्युणा सह सम्विदं कृत्वेति । इतरथा यदि स्थानमात्रमेवेष्टं स्यात् स्थित्वेत्येतावदेव ब्रूयादित्येवमेके । वयं तु ब्रूमः । नैष दोषः । यत्र स्थानमात्रमेवेष्यते तत्राप्यवपूर्वमेवोद्यते यथा "प्रत्यगुदगाहवनीयादवस्थाय" इति । तस्मादिह स्थानमात्रमेवेति सिद्धम् ।

अप्रपन्नत्वात्प्राङ्मुखग्रहणम् । इतरथोत्तरत्र विहारं प्रपन्नस्यैव प्राक्चेष्टाविधानादिहावस्थाने न स्यात् । कुतोऽप्रपन्नत्वात् । तन्निवृत्त्यर्थं प्राङ्मुखग्रहणम् । यज्ञोपवीतिग्रहणं कर्माङ्गभूतम् । द्वितीयं यज्ञोपवीतं कथं कुर्यादित्येतदर्थम् । आचमनमपि तद्वदेव । अथवा स्नातकशास्त्रे यज्ञोपवीतसहकारिणामुष्णीषच्छत्रादीनां प्रतिषेधार्थमिह नियमः क्रियते । अथवोत्तरत्र प्रपन्नस्य "यज्ञोपवीतशौचे च" इति शास्त्रसिद्ध्यर्थमन्य[5]प्रयोजनार्थं प्रपन्नस्य विधीयते ।

---

(१) B³, -मास्यायाममा- B¹, -मास्याया अमा- B².

(२) अत- B¹, अ- B² B³.   (३) B² B³, तस्मात्तत् B¹.

(४) B³, -क्ष्ये- B¹, -क्ष्वे- B².

(५) B¹, शास्त्रसिद्ध्यर्थमप्यन्य- B³, शास्त्राद्धिर्थमप्यन्य- B².

तथा सति प्रपन्नस्य यज्ञोपवीतविधानात्परिसंख्यानादप्रपन्नस्य यज्ञोपवीतमनित्यमिति एवमर्थो गृह्येत । तन्निवृत्त्यर्थं यज्ञोपवीतग्रहणम् । आचमनेऽपि प्राङ्मुख इत्येतदनुवर्तते । तस्य ज्ञापकम् "अस्तमिते होमो नित्यमाचमनम्" इत्यत्र नित्यग्रहणात्पूर्वं स्व[1]शास्त्रविहितस्य पुनर्वचो[2] नित्यग्रहणं करोति । यथा "अदृष्टादेशे नित्ये नित्यमाप्यायनम्" इत्येवमादिषु । तद्वदत्रापि नित्यशब्देनेहोक्तमेतदाचमनमाकृष्यते । यदी[3]हाचमने प्राङ्मुखत्वं नानुवर्तेत, अस्याचमनस्य स्वशास्त्रविहितो विशेष[4]विधिः किंचिदपि न स्यात् । तथा सति नित्यग्रहणमपार्थकं स्यात् । न चापार्थकं वाक्यं वाक्यावयवं वाचार्यो ब्रवीति । क्रियते च तत्र नित्यग्रहणम् । तस्मादिह प्राङ्मुख इत्यनुवर्तत एवेति सिद्धम् ।

"एतस्मिन्काले प्रपद्याच्छावाक एतस्मिन्काले ग्रावस्तुत्प्रपद्यते" इत्येवमादिषु विहारग्रहणादृतेऽपि विहारप्रपदनं सिध्यति । तद्वदिहापि सिध्यति । अथवा वितानं योगापत्तिमिति विहारप्रपदने सिद्धे पुनरिदं विहारं प्रपद्यत इति विहारग्रहणमस्मिन् प्रकरणे यन्निर्दिश्यमानं तद्यत्र यत्र[5] यो यो विहारं प्रपद्येत तत्र तत्र तस्य तस्यापि कथं स्यादित्येवं सर्वस्मिन्सर्वत्र[6] सर्वस्य प्राप्ते पूर्वं स्थानाचमने दर्शपूर्णमासयोरेव, नाग्निहोत्रादिषु । तत्रापि होतुरेवेति नियमितत्वाद्यत्पुरुषप्रदक्षिणा-

---

(१) B² B³, स्व-omitted in B¹.
(२) B² B³, वचः omitted in B¹.
(३) B³, यदि-B¹ B².
(४) विशेषे B¹. (५) यत्र omitted in B¹.
(६) सर्वत्र omitted in B¹.

वृत्त्वं पूर्वेणोत्करमित्येवमादि चैतत्सामान्यं भवति ॥

इध्ममपरेणाप्रणीते ॥ ५ ॥

पूर्वस्मिन्सूत्रेऽपरेण प्रणीता इत्यपरेण शब्दे सत्यपि अनन्तरं पुनरिहापरेणेति वचनं पूर्वसूत्रनिर्दिष्टस्य पूर्वेणेत्यस्य निवृत्त्यर्थम् । इतरथा पूर्वेणेत्यस्याप्यनुवृत्तिः स्यात् । कुतः । एकवाक्यनिर्दिष्टत्वात् । एवमिहापरेणेति ब्रुवन् ज्ञापयति । एकवाक्यनिर्दिष्टानां सह वानुवृत्तिः सह वा निवृत्तिः । नान्यतरस्य वाक्यावयवस्येति । तस्मात् "अग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामेके" इत्युक्तत्वात् पुनः "नैके कश्चन" इति प्रतिषेध उभयोर्दर्शपूर्णमासयोर्भवति । कुतः । एकवाक्यनिर्दिष्टत्वात् । तस्मान्नान्यतरस्याममावास्यायामेवेति ॥

[ चात्वालं चात्वालवत्सु ॥ ६ ॥[1] ]

एतत्तीर्थमित्याचक्षते ॥ ७ ॥

आचक्षत इति वचनमग्निहोत्रादिषूत्करादीनामभावेऽपि तद्वदुपचारेण प्रदर्शनार्थम् ॥

तस्य नित्याः प्राञ्चश्चेष्टाः ॥ ८ ॥

तस्येति । तस्य विहारं प्रपन्नस्येत्यर्थः । इह होतुरधिकारो नि-

---

(१) This Sūtra, though quoted above in the Bhāṣya (१।१।१, page 4), is omitted here in B¹ B² B³.

वर्तत इति ज्ञापयति यदयमुत्तरत्र "कर्मचोदनायां होतारम्" इति होतृग्रहणं करोति । इतरथा तत्र होतृग्रहणमपार्थकम् । कुतः । कर्मचोदनायां होतारमिति सिद्धत्वात् । तस्मादिह तस्य तस्य विहारं प्रपन्नस्येति सिद्धम् । अथवा पूर्वं विहारग्रहणमधिकारार्थं कृतमिति मन्तव्यम् ।

इह चेष्टा ना[1]मूर्तिमद्द्रव्यमाश्रित्य वर्तते । न च तस्याश्चेष्टाया मूर्तिः[2] । तस्माच्चेष्टायाः प्राङ्मुखत्वं नोपपद्यते । विधीयते चाचार्येण प्राङ्मुखत्वं चेष्टायाः । तस्मान्मन्यामहे चेष्टाया[3] आश्रयभूतानां कर्तृकरणादीनां प्राङ्मुखत्वं भवतीति । यथा सर्वप्रायश्चित्तहोमे "होता प्राङ्मुखः प्रागग्रेण स्रुवेण चाहुतिं जुहुयात्" इति । तथान्यत्रापि ।

कर्म्मकाल एवैताः[4] परिभाषाः कथं स्युरिति एतदर्थं नित्यग्रहणम् । नहि कण्डूयनादिष्विति ।।

## अङ्कधारणा च ।। ६ ।।

यत्र निरसनोपवेशने निषिद्धे "न पत्नीसांयाजिके" इत्येवमादिकेषूपवेशनेषु दक्षिणोत्तर्युपस्थत्वमेव कथं स्यादित्येतदर्थम् । इतरथा

---

( १ ) B², चेष्टानां B¹ B³.

( २ ) हेत्वं न प्रध्वंसिना (-नि B³) addad in B² B³, हेत्वं न प्रध्वंसिनी added but struck out in B¹.

( ३ ) B³, चेष्टायां B¹B².

( ४ ) B², एवैषाः B¹, एवैतां B³.

यत्र निरसनोपवेशने प्रतिषिद्धे तत्र निरसनोपवेशनसहचारित्वाद्दक्षिणोत्तर्युपस्थत्वं न स्यात् । तन्मा भूदित्यारभ्यते ॥

## यज्ञोपवीतशौचे च ॥ १० ॥

नित्ये इत्यनुवर्तते । यज्ञोपवीतशौचाभ्यां विना किंचिदपि कर्म न[1] कर्त्तव्यमित्येतदर्थम् । इतरथा शस्त्रादीनां मध्ये यदि यज्ञोपवीतस्य विनाशो वा स्यात् मुखाद्वा विप्रुषो निपतेयुस्तथापि शस्त्रादीनां विच्छेदे प्रायश्चित्तं भवतीति मत्वा शस्त्रादीनि परिसमाप्यैव यज्ञोपवीतं कुर्यात् । आचमनं वा । तन्मा भूदिति यज्ञोपवीतं कृत्वाचम्य पुनः शेषः समापयितव्य इत्येतदर्थमेतदारभ्यते। प्रमादाद्यज्ञोपवीतशौचाभ्यां विना कृते प्रायश्चित्तं कुर्यात् । "ऋक्तश्चेद् भूरिति गार्हपत्ये" इत्येवमर्थं च । अथवा "दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम्" इत्येवमादिषु पैतृकेष्वेव कर्मसु वचनादृते यज्ञोपवीतमेव कथं स्यादित्येवमर्थम् । अथवा "प्राचीनावीती तूष्णीं स्वधा पितृभ्यः" इति एवमादिषु प्राचीनावीतीग्रहणं कथं तत्रैवावतिष्ठेत, उत्तरत्र नानुवर्तेतेत्येतदर्थं यज्ञोपवीतग्रहणम् ॥

## विहाराद्व्यावृत्तिश्च तत्र चेत्कर्म ॥ ११ ॥

यदा पूर्वं प्राङ्मुखः सन् प्रत्यङ्मुखो गच्छति तदा विहाराभिमुखो दक्षिणावृद्भूत्वा कथं गच्छेत् । यदा पूर्वं प्रत्यङ्मुखः सन्

---

(१) न omitted in B[1].

पुनः प्राङ्मुखो भविष्यति तदा कथं च सव्यावृद्देवावर्तेत इत्येतदर्थम् । दक्षिणत उपवेशने ब्रह्मण उदङ्मुखत्वार्थं चैतदारभ्यते । तत्र चेत्कर्मेति तस्मिन्विहारे कर्म भवति चेदि[1]त्येतदर्थम् । एतस्मि[2]न्ननुच्यमाने सोमप्रवहणादिषु[3] शालायां कर्माभावेऽपि अग्न्यभिमुखार्थं प्रत्यङ्मुखः स्यात् । तच्च नेष्यते शालायां कर्माभावात् । प्राङ्मुखः स्यादित्येतदारभ्यते ॥

## एकाङ्गवचने दक्षिणं प्रतीयात् ॥ १२ ॥

एकजातीयमङ्गमेकाङ्गम् । "प्रपदेन बर्हिराक्रम्य", "पाणींश्च[4] मसेष्ववधाय" इत्येवमादीन्युदाहरणानि । इहापि तत्र चेत्कर्मेत्यनुवर्तयिष्यामः । तस्मात् "अंसेऽध्वर्युमन्वारभेत", "ब्राह्मणपाण्यजकर्ण" इत्येवमादिष्वपि दक्षिणाङ्गप्रत्ययो भवति । इतरथा अध्वर्यु[5]ब्राह्मणपाण्यादीनामस्मत्पुरुषाभावात् तत्रैषा परिभाषा न स्यात् । तत्रापि प्राप्त्यर्थम् । यत्र पुनरन्येऽस्मत्प्रोक्तं कर्म कुर्वंति यथा "पश्चादुत्तरवेदिरुपविश्य" इत्येवमादि तत्रास्मच्छास्त्रोक्ताः परिभाषाः प्राप्नुवन्त्येव ॥

## अनादेशे ॥ १३ ॥

अत्र चकारलोपो द्रष्टव्यः । अनादेशे चेति । अनादेशे च

---

( १ ) B³,-दि-omitted in B¹ B². ( २ ) एतदस्मि-B¹.
( ३ ) सोमे प्रवहणादिषु B¹, सोमप्रवहणेषु B² B³.
( ४ ) पाणिं च-B¹. ( ५ ) B², अध्वर्युर् B¹ B³.

दक्षिणां प्रतीयात्। "ऐन्द्रवायवमुत्तरेऽर्द्धे", "द्रोणकलशाद्धाना गृहीत्वा" इत्येवमादीन्युदाहरणानि। तत्र तत्र पाण्यादेशेऽविद्यमानेऽपि दक्षिणेनैव पाणिना कर्म कर्तव्यमिति। "अङ्गुष्ठोपकनिष्ठिकाभ्याम्"इत्यत्रापि पाणेरनादिष्टत्वाद्दक्षिणस्य पाणेरिति सिद्धम्।

केचित् एतत्सूत्रद्वयमेकं कृत्वा वर्णयन्ति। तत्र कोऽर्थः। एकमित्यस्याङ्गिना सम्बन्धः। एकस्य पुरुषस्येति। एकाङ्गमिति कर्मणि च करणे च। कर्मणि "अंसेऽध्वर्युमन्वारभेत" इति कर्मणि द्वितीयेति। तत्र दक्षिणेंऽस इति करणेऽपि "पार्श्वस्थेन पाणिना" इति। अनादेश इति वचनम् "सव्येन पाणिना होतृचमसमाददीत"इत्येवमादिषु सव्यस्यादिष्टत्वान्नैषा परिभाषा प्राप्नुयादित्येतदर्थम्। इतरथा परिभाषासामर्थ्याद्विकल्पः स्याद्दक्षिणस्यापि समुच्चयो वोभयोस्तन्निवृत्त्यर्थमनादेशग्रहणम्। प्रसङ्गेनापि दक्षिणेन यदि कुर्यात्प्रायश्चित्तमेव कर्तव्यमिति। "उत्तरे[1]ऽर्द्धे गृहीत्वा"इत्येवमादिषु अर्थतः सिद्धमङ्गग्रहणमङ्गं विना कर्मप्रवृत्त्यभावात्। तस्माद्दक्षिणाङ्गसंप्रत्ययो भवति। अस्यां योजनायामेकग्रहणस्य "पाणींश्चमसेष्ववधाय"इत्येवमादीन्यनेकपुरुषविषयत्वात्प्रत्युदाहरणानि भवन्ति। न तत्रैषा परिभाषा स्यात्।

अनादेश इत्युत्तरसूत्रेष्वप्यनुवर्तयति॥

## कर्मचोदनायां होतारम्॥ १४॥

सोमप्रवहणप्रातरनुवाकादीन्युदाहरणानि। अस्मिन्ननुच्यमाने

(१) उत्तरा-B[1].

"तस्यर्त्विजश्चत्वारः त्रिपुरुषाः" इति सोमस्य बहूनां कर्तॄणामधिकृतत्वात्सोमप्रवहणादिष्वनियमेन तेषां यः कश्चित्कुर्यात्तन्मा भूदिति । अनादेश इति वचनम् "एतस्मिन्काले प्रपद्याच्छावाकः" इत्येवमादिषु कर्तुरादिष्टत्वात्प्रसङ्गेनापि होता मा भूदिति ॥

## ददातीति यजमानम् ॥ १५ ॥

इहार्थतो ग्रहणं न शब्दतः । यदि शब्दतो ग्रहणम् "चतुः शरावमोदनं ब्राह्मणान्भोजयेत्" इत्येवमादिषु ददातिशब्दचोदितत्वाभावाद्यजमानकर्तृकत्वं न स्यात् । इष्यते च तत्रापि यजमानकर्तृकत्वम् । तस्मादर्थतो ग्रहणं न शब्दत इति वर्णयिष्यामः । आचार्यश्च ज्ञापयति अर्थसामान्येन ग्रहणं न शब्दसामान्येनेति यदिदम् "लेखां त्रिरुदकेनोपनयेत्" इत्यत्रोपपूर्वं नयतिमुक्त्वा पश्चात्तस्यैव "नित्यं निनयनम्" इति निपूर्वेण ग्रहणं करोति । तथा मैत्रावरुणं च प्रशास्तृशब्देन चोदयति । तत् ज्ञापयत्य[1]र्थसामान्येन[2] ग्रहणमिति ।

इयं परिभाषा दक्षिणार्थेष्वेव दानेषु भवति । नेतरत्र । "मुख्यं धनं दद्यात्", "चतुःशरावमोदनं ब्राह्मणान्भोजयेत्" इत्येवमादीन्युदाहरणानि ।

यत्र कर्मप्रसिद्ध्यर्थं यज्ञाङ्गभूतस्य कस्यचिद् द्रव्यस्य दानं चोद्यते तत्र होतैव कर्त्ता । यथा "प्रशास्तारं तीर्थेन प्रपाद्य दण्डमस्मै

(१) ज्ञापयतीत्य-$B^1$ $B^3$, ज्ञापयतित्य-$B^2$.
(२)-सामान्ये $B^1$.

प्रयच्छेत्'' इत्येवमादिषु । इतरथा यदि सर्वत्र यजमान एव प्रदाता स्यादुत्तरत्र सत्रप्रकरणे ''दण्डप्रदाने च'' इति दण्डाभिधानस्योहविधानमपार्थकं स्यात् । कुतः । स्वं स्वं दण्डं स स यजमानः स्वयमेव ददाति हि । नैतदस्ति प्रयोजनम् । ''एको ह परार्थेषु'' इति यदैक एव यजमानः सर्वान्दण्डान्ददाति तत्र यजमानकर्तृकत्वेऽपि दण्डाभिधानस्योहविधानं सार्थकमेव । तस्मात्सप्रयोजनमेतत् । उच्यते। सर्वाणि दानानि यदि यजमानकर्तृकाणि स्युः ''आज्येनाक्षिणी आज्य[1] च्छन्दोगेभ्यः प्रयच्छेत'', ''प्रतिप्रदाय द्रोणकलशम्'' इत्येवमादिष्वपि यजमान एव दाता स्यात् । तच्च नेष्यते । तस्माद्दक्षिणार्थ एव यजमान इति सिद्धम् । ।

तत्रैतत्स्यात् । दक्षिणार्थ एवेयं परिभाषा नैतया प्रयोजनम् । कुतः । लोकसिद्धत्वात् । यथा लोके कर्मफलभोक्तुः स्वधनत्यागो दृश्यते तद्वदिहापि यजमानस्य यज्ञफलभोक्तुः स्वधनत्यागो भवतीति । अत्रोच्यते । इह शास्त्रे ''कर्मचोदनायां होतारम्'' इति परिभाषितत्वात् ''मुख्यं धनं दद्यात्'' इत्येवमादीन्यपि होतुरेव स्युर्यजमानस्य स्वमादाय । कुतः । शास्त्रलोकयोर्विरोधे शास्त्रबलीयस्त्वात्कृतकत्वाच्च यत्तस्य ''कर्मचोदनायां होतारम्'' इति । तस्माल्लोकतः सिद्धस्यापि पुनर्वचनं क्रियते । यत्र तु शास्त्रमुदासीनं तत्र लोकत एवाभ्युपगन्तव्यम् । होतैव दण्डस्य दातेति । यदि दण्डप्रदानमपि यजमान एव कुर्याद्यजमानस्य समन्त्रकम् ''दक्षिणोत्तराभ्याम्'' इति सोपायं कर्म-

---

(१) अज्य B¹ B²,

यद्येवम्, जपतिग्रहणेनोपांशुमन्त्राणि कर्माणि गृह्यन्ते चेज्जुहोतेः प्रथम[1]-ग्रहणं कस्मात् । उच्यते। अन्येषां कर्मणां जुहोतेश्च वैधर्म्यज्ञापनार्थम् । अन्यानि कर्माणि मन्त्रेषु प्रतिषिद्धेष्वपि तूष्णीं क्रियन्ते। तस्य ज्ञापकं पित्र्यायां प्रादेशप्रतिषेधः। यदि मन्त्रप्रतिषेधे कर्मणोऽपि प्रतिषेधः स्यात् प्रादेशप्रतिषेधोऽपार्थकः स्यात् । "सा शंय्वन्ता लुप्तजपा" इति मन्त्रलोपादेव सिद्धत्वात् । तस्मान्न मन्त्रलोपे कर्मलोपो भवतीति सिद्धम् । ननु ( ?=न तु ) तथा जुहोतेः । तस्मात् "आवृतैव कुमार्याः" इत्यत्र मन्त्राभावादेव होमस्याप्यभावः । तथा "धाता ददातु दाशुषे" इत्येवमादिषु प्रतिमन्त्रं होमास्यावृत्तिरिति । इतरथा "न गुणः प्रधानमावर्तयति" इति मन्त्राणां होमस्य गुणभूतत्वात्सर्वैर्मन्त्रैः सकृदेव होमः स्यात् । तन्निवृत्त्यर्थं जुहोतेः प्रथमग्रहणमिति केचित् ।

"तुभ्यं ता अङ्गिरस्तमेत्याज्याहुतिं हुत्वा" इत्याहिताग्नेरेव होममिच्छन्ति । कस्मात् । उत्तरसूत्रेऽपि "एवमनन्वाहिताग्निरहुत्वा" इति पूर्वसूत्रवत्षष्ठ्या निर्देशे कर्त्तव्ये "अनन्वाहिताग्निः" इति प्रथमया कर्त्तारं निर्दिश्य होमप्रतिषेधकरणादेवमिति पूर्वसूत्रसिद्धस्यानुवर्णनात् पूर्वस्मिन्सूत्रे सिद्धमनन्वाहिताग्नेः स्वयं होम इति ॥

## ऋचं पादग्रहणे ॥ १७ ॥

ऋचं पाद इत्येतावत्येवोच्यमाने इयं प्रयोगपरिभाषा स्यात् । तथा सति पाद उक्ते सर्वा ऋगुक्ता भवतीति ज्ञायेत । तन्मा भूत् ।

---

( १ ) प्रथम-$B^3$, पृथम-$B^1$, पृथ-$B^2$.

ग्रन्थपरिभाषा कथं स्यादित्येतदर्थं पादग्रहण इत्युच्यते । अनादेश इत्यनुवर्तते तृचादिष्टा[1]दिषु प्रसङ्गेनाप्यृङ् न[2] स्यादिति ॥

## सूक्तं सूक्तादौ हीने पादे ॥ १८ ॥

सूक्तं हीने पाद इत्येतावता सिद्धेऽपि सूक्तादाविति वचनं पूर्वस्मिन्सूत्रे ऋच आदौ पादग्रहण एव ग्रहणं भवतीति । "अथा भव यजमानाय शंयोः" इत्येवमादिष्वन्त्यपादग्रहणादृग्ग्रहणं न भवति । पूर्वस्य कल्पमन्त्रस्य शेष एव भवति । तथाऽनीकवतोऽनुवाक्यायाम् "स नः पर्षदति द्विषः" इति पूर्वमन्त्रस्य शेष एव भवति । इतरथा यस्यामृचि स पादस्तस्यामृचो ग्रहणं स्यात्तन्निवृत्त्यर्थम् ॥

## [ अधिके तृचं सर्वत्र ॥ १९ ॥[3] ]

## जपानुमन्त्रणाप्यायनोपस्थानान्युपांशु ॥ २० ॥

इहापि सर्वत्रेत्यनुवर्तते । तस्मात्सर्वेष्वपि जपादीन्युपांश्वेव भवन्ति । इतरथा "मध्यमस्वरेणेदं सवनम्", "अथ तृतीयसवनमुत्तमस्वरेण" इति सवनस्वरस्याल्पविषयत्वाज्जपादीनामपि सवनस्वरः स्या-

---

(१) -ष्टा- B², -ष्वा- B¹, -ष्टा- changed to-ष्वा-in B³.

(२) B³, प्रसंगेनाप्यूरः B², प्रसंगेनाप्राङ् न B¹.

(३) This Sūtra is omitted in B¹ B² B³. Sūtras given within brackets in the following should similarly be taken as omitted in B¹B²B³.

त्तन्निवृत्त्यर्थम् । आप्यायनस्योत्तरसूत्रेण कर्मकरणत्वेनैवोपांशुत्वे सिद्धेऽपि पृथग्ग्रहणमन्यैः कर्मभिराप्यायनस्य वैधर्म्यज्ञापनार्थम् । अन्यानि मन्त्रान्ते क्रियन्ते आप्यायनं तु मन्त्रादारभ्य क्रियते । एतद्वैधर्म्यम् । यस्मादनुमन्त्रणोपस्थानयोर्मन्त्रव्यतिरिक्ता शरीरचेष्टा नास्ति तस्मात्तयोः पृथग्ग्रहणमाप्यायनादिषु कर्मसूपांशुत्वस्यासंभवात्तत्साधकानां मन्त्राणामुपांशुत्वं विधीयते ॥

## मन्त्राश्च कर्मकरणाः ॥ २१ ॥

पूर्वसूत्रेण सहोपस्थानकर्मकरणा उपांश्वित्येकसूत्रेणैव सिद्धे पृथक्सूत्रकरणमनुवचनाभिष्टवनमध्यपतितानाम् "अपश्यं त्वेत्ये[1]तस्याग्नया यजमानमीक्षते" इत्येवमादीनां कर्मकरणानामुपांशुत्वनिवृत्त्यर्थम् । कर्मकरणा इत्येतावता सिद्धेऽपि मन्त्रा इति वचनं "षष्टिश्चाध्वर्यो", "देव बर्हिः स्वासस्थम्" इत्येवमादीनामकर्मकरणानामपि मन्त्राणामुपांशुत्वार्थं मन्त्रग्रहणम् । । एवं चेत्पूर्वसूत्रं न कर्त्तव्यम् । कर्मकरणानामप्युपांशुत्वं न वक्तव्यम् । मन्त्रा उपांश्वित्येव वक्तव्यम् । कथम् । एतावतैव जपादीनां कर्मकरणानामप्युपांशुत्वं सिध्यति । तस्माज्जपादीनां पृथग्ग्रहणं न कर्त्तव्यमित्युच्यते । एवं सिद्धेऽपि जपादीनां पृथग्ग्रहणं कुर्वन् ज्ञापयति । येषां मन्त्राणां जपादिविशिष्टसंज्ञा न विद्यते, क्रियाचोदना च, तेषामेव इह मन्त्रग्रहणेन ग्रहणम् । नानुवचनादीनां विशिष्टसंज्ञानां मन्त्राणामुपांशुत्वम् । इतरथाऽनुवचनादीनां विशिष्टसंज्ञानामपि मन्त्रा-

---

( १ ) -त्ये-omitted in B[1].

णामुपांशुत्वं स्यात् । तन्निवृत्त्यर्थं जपादीनां विशिष्टसंज्ञानां पृथग् ग्रहणं क्रियते ॥

## प्रसङ्गादपवादो बलीयान् ॥ २२ ॥

"एकाङ्गवचने दक्षिणं प्रतीयात्" इति प्रसङ्गः । "सव्येन पाणिना होतृचमसमाददीत" इति तस्यापवादः । तस्मात्तस्य दक्षिणस्य नियमनिवृत्तिर्भवति । इतरथा दक्षिणसव्ययोर्विकल्पः स्यात्समुच्चयो वा तन्निवृत्त्यर्थम् । आह । लोकतः सिद्धमेतत् । यथा लोके ब्राह्मणेभ्यो दधि दीयतामित्युक्त्वा तक्रं कौण्डिन्यायेत्युक्ते तक्रमेव कौण्डिन्याय दीयते । न दधितक्रयोर्विकल्पः स्यात् । समुच्चयो वा न भवति । तद्वदिहापीति । उच्यते । यद्येवमिदमस्य प्रयोजनम् । प्रसङ्ग इव प्रसङ्गोऽपवाद इव । कस्यापवाद[1] इति । द्वयोरपवादयोर्विरोधे बहुविषयापवादादल्पविषयोऽपवादो बलीयानिति । यथा स्वादुष्किलीयासु "मदा मोदैव मोदा मोदैवोमित्यासां प्रतिगरो" इति प्रणवेषु प्रणवेषु मोदा मोदैवो३मित्ययं प्रतिगर आहावोत्तरप्रणवे प्राप्तः, तथा "प्रणव आहावोत्तरे" इत्ययम् "प्लुतादिः प्रणवे" इत्यस्यापवादभूत आहावोत्तरप्रणवे प्राप्तः । एवमत्र सावकाशनिरवकाशयोरपवादभूतयोः प्राप्तयोरपवादाल्पविषयत्वान्मोदा मोदैवोमित्ययमेव प्रतिगर आहावोत्तरे प्रणवे कथं स्या-

---

(१) B³, इवाकस्यवाद (with marks of deletion) B¹, इत्यवाकस्यापवाद B².

दिति । एवमन्यत्रापि । अथवापवादविषयेऽपि कदाचित्प्रसङ्गोऽपि भवतीति ज्ञापनार्थम् । तेन किं सिद्धं भवति । यत्रानादेशवचनमन्यद्वा यत्रान्तरं नास्ति तत्र प्रमादात्प्रसङ्गेनापि कृते न दोष इति । यथा "प्राचीनावीती तूष्णीं स्वधा पितृभ्यः" इत्येवमादिषु प्रमादाद्यज्ञोपवीतिना कर्मणि कृते न प्रायश्चित्तमिति ॥

**प्रपद्याभिहततरेण पादेन वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय प्रपदेन बर्हिराक्रम्य संहितौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसम्मितावङ्कसम्मितौ वा द्यावापृथिव्योः सन्धिमीक्षमाणः ॥ २३ ॥**

"दाक्षिणावृद्विहारं प्रपद्यते" इति प्रपदने सिद्धे पुनरिह प्रपद्येति वचनं सर्वार्थम् । कथम् । यो यः प्रपद्यते तस्य तस्य वक्ष्यमाणो विधिः कथं स्यात् , न केवलं होतुरेवेति ॥

**एतद्धोतुः स्थानम् ॥ २४ ॥**

नियमार्थमेतदारभ्यते । अयं वेदिश्रोणिप्रदेशो होतुरेव नान्यस्येति । इतरत्सर्वं सर्वेषां भवतीति सिद्धम् ॥

**आसनं वा सर्वत्र ॥ २५ ॥**

वा शब्दः समुच्चये द्रष्टव्यः । सर्वत्र सर्वेषामासनं भवति न स्थानमिति । तस्मात् "चात्वाले मार्जयन्ते", "एकैकशो यजमानं

पृच्छन्ति" इत्येवमादिषु आसीनैरेव कर्त्तव्यमिति । कौपीतकिनामपि वचनम् "आसनत्वाय[1] बाह्वृच्यमुत्तरत उपचारः" इति ॥

## एवंभूतः वचनादन्यत् ॥ २६ ॥

अभिहततरेणोत्येवमाद्यायाः शरीरचेष्टाया वचनादेव विनाशो भवति नार्थादित्येतदर्थम् । तस्मात् "एवा न इन्द्रो मघवा विरप्शीति परिदध्यात् भूमिमुपस्पृशन्"इत्यत्र दक्षिणस्य भूम्युपस्पर्शने व्यापृतत्वात्सव्यस्य हृदयसम्मितत्वं कर्तव्यमेव । तथा "प्रत्यगुदगाहवनीयादवस्थाय जुहुयात्"इत्यत्रापि प्रपदेन बर्हिराक्रमणादि यच्छक्यं तत्कर्त्तव्यम् । इतरथा "संहितौ पाणी धारयन्"इति वचनाद्दक्षिणस्य व्यापृतत्वादुभयोः सन्निधानाभावात्सव्यस्यापि धारणं न स्यात् । तन्मा भूदिति । अथवैवंभूतो वचनादेवान्यत्कुर्यादिति । यत्र तु प्रत्यक्षविहितमासनं नास्ति यथा पौर्णादर्वघर्मयाज्यादिषु तत्र वेदेरभावेऽपि तद्वदुपचारेण वेदिश्रोणिप्रदेश एव आसनं कथं स्यादित्येतदर्थम् ॥

## प्रेषितो जपति ॥ २७ ॥ १ ॥

( इति प्रथमा कण्डिका )

---

(१) B[1], आसीनन्यायं B[2], आसनं धार्य्यं B[3],

नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च वाक्समस्थितयज्ञः साधु च्छन्दांसि प्रपद्येऽहमेव मामसुम्मिति स्वं नामादिशेत, भूते भविष्यति जाते जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्तिं वहेत्यङ्गुल्यग्राण्यवकृष्य, जातवेदो रमया पशून्मयीति प्रतिसन्दध्यात्, वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः । तदद्य वाचः प्रथमं मंसीयेति ॥ १ ॥

स्वं नामादिशेतेति यजमानस्य नामादेशनिवृत्त्यर्थम् । नैतदस्ति प्रयोजनम् । यत्र यजमानस्येच्छति तत्रास्येति ब्रवीति, यथा "असावसावित्यस्यादिश्य नामनी" इत्यत्र । तस्मान्नायमर्थ इति । उच्यते । सम्प्रति होतुरन्योऽपि हौत्रस्य कर्त्ता भवति चेत्तस्यैव नामादिशेत । न वृतस्यापि होतुर्बहिस्थस्येति । एवं ब्रुवन् ज्ञापयति । "आर्षेयाणि गृहपतेः प्रवरित्वात्मादीनां मुख्यानाम्" इत्यत्र यद्यप्यन्यः सम्प्रति हौत्रस्य कर्ता भवति तथापि बहिष्ठस्य होतृत्वेन दीक्षितस्यैव प्रवरं प्रवृणीत न सम्प्रति कर्तुरिति ।

समाप्य सामिधेनीरन्वाह ॥ २ ॥

समाप्य ग्रहणं नमः प्रवक्त्र इत्यादेः तदग्न वाच इत्येतदन्तस्यैकजपत्वप्रसाधनार्थम् । इतरथा "वाचो अशान्ति वेहेति", "जातवेदो रमया पशून्मयीति" च तत्रेतिशब्दकरणाद्बहवोऽपि मन्त्राः स्युस्तन्निवृत्त्यर्थम् । एकजपत्वेन प्रयोजनम् । अस्य जपस्य लोपे जपमध्यपतितत्वादङ्गुल्यग्रापकर्षणप्रतिसन्धानयोरपि लोपः । इतरथा मन्त्रे लुप्तेऽपि कर्मणोऽलोपः स्यात्तन्मा भूदिति ॥

[हिं३ इति हिंकृत्य भूर्भुवः स्वरो३मिति जपति ॥३॥]

[ एषोऽभिहिंकारः ॥ ४ ॥ ]

भूर्भुवः स्वरित्येव जपित्वा कौत्सो हिं करोति ॥ ५ ॥

एवकारः प्रणवनिवृत्त्यर्थः । इतरथा भूर्भुवः स्वरित्येवोच्यमाने प्रागधिकृतयोर्हिङ्कारजपयोः पुनरिह विपर्यासविधानमात्रमेव स्यात् । तथा सति यथाप्रदेशं प्रणवेन सह जपो हिङ्कारात्पूर्वं स्यात् । तन्निवृत्त्यर्थमेवकारकरणमिति । अथवा भूर्भुवः स्वरिति जपित्वा कौत्सो हिंकरोतीत्येवकारादृते उच्यमाने हिङ्कारादूर्ध्वं पूर्वविहित एव पुनरपि पूर्वसिद्ध एव सप्रणवो भूर्भुवः स्वरोमिति जपः स्यात्तन्निवृत्त्यर्थमेवकारकरणमिति पूर्वसिद्धस्यैव जपस्य स्थानविपर्यास एव विधीयत इति ॥

[ न च पूर्वं जपं जपति ॥ ६ ॥ ]

अथ सामिधेन्यः प्र वो वाजा अभिद्यवोऽग्न आयाहि वीतये गृणान ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे ॥ ७॥

"सामिधेनीरन्वाह" इति सामिधेनीष्वधिकृतासु पुनस्सामिधेनीग्रहणमभिहिङ्कारस्य सामिधेनी संज्ञा मा भूदिति । अभिहिंकारस्यापि सामिधेनीसंज्ञायाः(? याम्) "उशन्तस्त्वा नि धीमहीत्येतां त्रिरनवानन्ताः सामिधेन्यः" इत्यत्र समानजातीयधर्मेणाभिहिङ्कारस्याप्यपायः स्यात् प्रा[1]कृताभिः सामिधेनीभिस्सह, तन्निवृत्त्यर्थम् । पूर्वम् "सामिधेनीरन्वाह" इति सामिधेनीग्रहणमभिहिङ्कारस्य सामिधेनीसंज्ञायामसत्यामपि सामिधेन्यतिदिष्टानां शस्त्रादीनामभिहिङ्कारस्यान्तरङ्गत्वज्ञापनार्थम् । तस्मात् "एषेति प्रोक्त उद्गातुर्हिङ्कारे प्रातःसवन आह्वयीरन्" इत्यत्र एषेति प्रोक्त एवाभिहिङ्कारः स्यादिति सिद्धम् । इतरथैषेति प्रोक्त इति वचनात्प्राग्वाभिहिङ्कारः स्यात्तन्मा भूदिति ॥

[ ता एकश्रुति संततमनुब्रूयात् ॥ ८ ॥ ]

उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यम् ॥९॥

---

(१) प्रा-$B^1$ $B^2$, प्र-$B^3$.

परः सन्निकर्षः संहिता[1] प्रचयः। एकश्रुतिभाव ऐकश्रुत्यम्। व्याकरणे यज्ञकर्मणि एकश्रुति(१+२) भवतीति सिद्धे पुनरिह एकश्रुतिविधानमनुवचनादीनामुपांशुत्वेऽप्यैकश्रुत्यमेव कथं स्यादित्येतदर्थम्। यदा व्याकरणेनैकश्रुत्यं गृह्यते तत्र "यज्ञकर्मण्यजपन्यूङ्खसामसु" (अष्टा० १।२।३४) इति जपे एकश्रुतिप्रतिषेधात् "प्रथमामन्वाहोपांशु सप्रणवाम्" इत्येवमादिषु जपत्वादैकश्रुत्यं न स्यात्तन्मा भूदितीहैकश्रुतिविधानं क्रियते।

"एकश्रुति सन्ततम्" इत्यत्र ता अनुच्यमाने "समिद्धो अग्न आहुतेति द्वे" इति प्रकृते तयोरेवोत्तरो विधिः स्यात्। तन्निवृत्त्यर्थं ता इति वचनम्॥

**स्वरादिमृगन्तमोकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽवस्येत्तत् संततम्॥ १०॥**

स्वरादिमित्यनुच्यमाने व्यञ्जनान्ताया ऋचो व्यञ्जनानामेव प्रणवः स्यात्। तथा सति "देवान् जिगाति सुम्नयुः" इत्यत्र विसर्जनीयस्यैव प्रणवो भवति। एवं देवान् जिगाति सुम्नयुरित्यत्रानिष्टं प्रसज्येत। तन्नेष्यते। इष्यते च तस्यापि विसर्जनीयस्योपधास्वरेण सह प्रणवभावः। व्याकरणेऽपि "प्रणवष्टेः" (अष्टा० ८।२।८९) इति वचनम्। तदर्थं स्वरादिग्रहणम्।

अत्राह। यद्येवं केवलस्वरान्तायामृचि प्रणवो न प्राप्नोति,

(१) B³. संहितः B¹ B².

यथा "नि होता सत्सि बर्हिषि" इति । उच्यते । नैष दोषः । अत्रापि प्राप्नोत्येव प्रणवः । कथम् । आचार्यो ज्ञापयति । यदयं "उशन्तस्त्वा नि धीमहीत्येतां त्रिरनवानम्[१]" इत्युक्त्वा पुनराह "तासामुत्तमेन प्रणवेन" इति, तत्र प्रणवस्यास्तित्वं दर्शयति । सा च स्वरान्ता । तस्मात्केवलस्वरान्ताया अपि प्रणवो भवतीति सिद्धम् । अत्र कश्चित् ब्रूयात् तत्र तदेव प्रणवस्याप्राप्तस्य प्राप्तिवचनमिति । तन्नायमर्थः स्यात् । पूर्वमेव प्रणवस्याप्राप्तस्य प्राप्तिवचनमुक्त्वा पश्चादुत्तमेन प्रणवेनेत्येवमवक्ष्यत् । यत्पुनः प्रसिद्धमेव[२] प्रणवं कृत्वा ब्रवीति तत् ज्ञापकमेव भवति ।

ऋगन्तमित्यत्र ऋग्ग्रहणेऽक्रियमाणे निगदान्तेष्वपि प्रणवः स्यात् । कुतः । सामिधेन्यतिदेशात् । "समाप्तौ प्रणवेनावसानम्" इति । तन्मा भूदिति ग्रहणम् ।

ऋगन्तं मकारान्तमित्यनुक्त्वापि ओकारान्तमित्युच्यमाने ओकारान्तत्वं वा मकारान्तत्वं वेति शङ्का भवति तन्निवृत्त्यर्थं मकारान्तग्रहणम् नैतदस्ति प्रयोजनम् । अनुच्यमानेऽपि प्रणवस्य मकारान्तत्वमेवेति ज्ञायेत । यदयं तस्यान्तापत्तिं प्रकृत्य "स्पर्शेषु स्ववर्ग्यमुत्तमम्" इत्येवमादि(?) प्रणवान्तस्य विकारमुक्त्वा पुनरुत्तरत्र वक्ष्यति "नित्यं मकारे" इति । तस्मात्प्रणवान्तस्य यत्पूर्वोक्तं विधानं तन्मकारान्तस्येति सिद्धम् । ओकारं त्रिमात्रं कृत्वेत्युच्यमाने मकारस्य सार्द्धमोंकारस्य त्रिमात्रत्वं स्यात् ।

(१) $B^3$, त्रिरनवाम् $B^2$, अनवानम् $B^1$.

(२) $B^1$, इति for एव $B^2$ $B^3$.

तथा सति मकारस्याऽस्वरस्यार्धमात्रत्वादोकारे त्वध्यर्द्धे द्विमात्रे स्याताम् । एवं समस्तस्य त्रिमात्रत्वं स्यात्तन्नेष्यते । इष्यते केवलस्योकारस्य त्रिमात्रत्वम् । तस्मात् पृथग्वचनमिति । एवमर्धमात्रेण मकारेण सह प्रणवस्यार्द्धचतुर्थमात्रत्वं सिद्धम् । शास्त्रान्तरे च व्यक्तमेतत् । "प्रणवोऽर्द्धचतुर्थमात्रः" इति ।

आम्नायतः सिद्धेऽप्यर्धर्चेऽवसाने पुनरुत्तरस्यार्धर्चे (१ = उत्तरस्या अर्धर्चे) इति वचनं नियमार्थमर्धर्चे एवावस्येन्न ऋगन्त इति । इतरथा ऋगन्तेपि प्रणवं कृत्वा पुनस्तत्रैवावसानं स्यात् । तत्राम्नाये ऋगन्तेऽवसानस्य दृष्टत्वात् । तन्मा भूदिति । इहार्धर्चग्रहणेनाम्नायप्रसिद्धोऽर्धर्चो गृह्यते । नर्चोऽर्धमर्धर्च इति । तस्य ज्ञापकम् । "अष्ठयां त्रिरवस्येदर्धर्चेऽर्धर्चे" इत्येकस्यामर्धर्चबहुत्वदर्शनम् । यदृचोऽर्धमर्द्धर्चं स्यात् तत्रार्द्धर्चेऽर्धर्चे इत्ये[1]कस्यामेवार्धर्चबहुत्वदर्शनं[2] विरुध्यते । तस्मात्सिद्धमाम्नायत[3] एवार्धर्चप्रतिपत्तिरिति ॥

## एतदवसानम् ॥ ११ ॥

एतत्सूत्रमुत्तरार्थम् । कथम् । "उत्तरादानमविप्रमोहे" इत्यत्र पूर्वस्यावसानस्याविप्रमोहे उत्तरस्यावसानारम्भः कार्य इत्यवसानाधिकारोऽनुवर्तेतेत्येतदर्थम् । एकैकमवसानमविप्रमूढं ब्रूयादित्यर्थः ।

---

( १ ) इत्ये-$B^2$, ए-$B^1$ $B^3$.

( २ ) $B^2$ $B^3$, अर्धर्चं दर्शनं $B^1$.

( ३ ) $B^2$ $B^3$, आम्नाय-$B^1$.

नैकैकामृचमेकैकमर्धर्चमिति । यथोत्तरस्यामृचः प्रथमेऽर्धर्चे विप्रमोहः स्यात्तदा पूर्वा ऋक् साधूक्तेति कृत्वोत्तरस्या ऋचः पुनः प्रथममर्धर्चमेवाददीत । तन्मा भूत् । कथम् । पूर्वस्या अन्त्यमर्धर्चं साधूक्तमपि पुनराददीतेत्येतदर्थमधिकारार्थमेतदवसानमित्युच्यते । यदि पूर्वमवसानं विप्रमूढमेवोक्त्वोत्तरमारभेत तथा सति प्रायश्चित्तमेव कर्त्तव्यमिति । उत्तरं नारभ्यते चेत् पूर्वमेव यावत्साधुवचनं तावत् बहुशोऽभ्यस्यापि अविप्रमोहेनोक्त्वा पुनरारम्भो[1] न प्रायश्चित्तमिति सिद्धम् ॥

## [ उत्तरादानमविप्रमोहे ॥ १२ ॥ ]

## समाप्तौ प्रणवेनावसानम् ॥ १३ ॥

उत्तराभावेनापि प्रणवेनावसाने सिद्धेऽपि पुनर्वचनं कस्मात् । उच्यते । सन्तानार्थत्वात् प्रणवस्य समाप्तौ वचनम् । सन्तानाभावात्प्रणवनिवृत्तिः स्यात्तन्मा भूदिति । एतदेव ज्ञापकं सन्तानार्थं प्रणव इति । तस्मात् "उत्तमेन पदेन संतनुयात्" इत्यत्र सन्तानविधानादृगन्तेऽपि प्रणवः सिद्धः । तथा "अर्धर्चान्तैः संतानः" इत्यत्रापि प्रथमेऽर्धर्चान्ते प्रणवसिद्धिरिति ॥

## चतुर्मात्रोऽवसाने ॥ १४ ॥

समाप्तौ प्रणवेनावसानं चतुर्मात्रोऽवसान इत्येकसूत्रभावे[2] दो-

---

( १ ) B¹, पुनरनन्तरारंभो B³, पुनरन्तरारंभो B².

( २ ) B² B³,-सूत्राभावे B¹.

षः । असमाप्तावसाने चतुर्मात्रत्वं न स्यात् । घर्मादिष्विष्यते चादौ मध्येऽवसाने चतुर्मात्रत्वम् । तस्मात्पृथक्सूत्रकरणं द्विरवसानग्रहणं च ॥

तस्यान्तापत्तिः ॥ १५ ॥

स्पर्शेषु स्ववर्ग्यमुत्तमम् ॥ १६ ॥

अन्तस्थासु तां तामनुनासिकाम् ॥ १७ ॥

रेफोष्मस्वनुस्वारम् ॥ १८ ॥

एतानि सूत्राणि न वक्तव्यानि पार्षदे व्याकरणे च सिद्धत्वात्। कथम्।"विस्थाने स्पर्श उदये मकारः सर्वेषामेवोदयस्योत्तमं स्वम्"(ऋ० प्रा० ४।६) इति "स्वर्शेषु स्ववर्ग्यमुत्तमम्"इत्यस्यार्थः सिद्धः । "अन्तस्थासु रेफवर्जं परासु तां तां पदादिष्वनुनासिकां तु" (ऋ० प्रा० ४।७) इति "अन्तस्थासु तां तामनुनासिकाम्"इत्यस्यार्थः सिद्धः। "रेफोष्मणोरुदययो र्मकारोऽनुस्वारं तत्परिपन्नमाहुः" इति "रेफोष्मस्वनुस्वारम्" इत्यस्यार्थः सिद्धः । एवं सिद्धस्यापि पुनरिह विधानं क्रियते । तस्य प्रयोजनमस्मिञ्छास्त्रे वचनादृते पार्षदसंधिर्न वक्तव्य इति । तस्मात्प्रवर्ग्येऽर्धर्चयोस्संताने "निधिमन्तमच्छ ब्रह्मणेव" इत्यत्राच्छशब्दस्य दीर्घभावो न भवति । यदि पार्षदसंधिः स्यात् "सुता याहीत्यतोऽन्येषु पदेष्वच्छेति विग्रहे" ( ऋ० प्रा० ७।६ ) इत्यच्छशब्दस्य दीर्घभावप्रकरणे दीर्घत्वं विधीयते तन्नेष्यते । तस्माद्बाष्कलकानामपि यज्ञप्रयोगे वकारे परे प्रणवान्तभूतस्य मकारस्येह विधानात् "अन्त-

तस्थासु तां तामनुनासिकाम्" इत्येतदेव कर्त्तव्यम् । तस्मादर्थवद्वचनमिति ।

अथ व्याकरणे सिद्धत्वान्न वक्तव्यमेव । उच्यते । एतेष्वनारभ्यमाणेषु वकारे परे मकारस्यानुस्वारो विभाषा भवति । कुतः । व्याकरणे "वा पदान्तस्य" ( अष्टा० ८।४।५९ ) इति विभाषयोक्तत्वात् । तन्निवृत्त्यर्थमिष्टपरिग्रहार्थं च एतान्यारभ्यन्ते ॥

## त्रिः प्रथमोत्तमे अन्वाहाध्यर्धकारम् ॥ १९ ॥

अध्यर्द्धकारमिति वक्ष्यमाणस्य विधानस्य संज्ञा क्रियते । संज्ञाप्रयोजनं "अध्यर्द्धकारं प्रथमाम्" इत्येवमादिषु ॥

## अध्यर्द्धामुक्त्वाऽवस्येदथ द्वे ॥ २० ॥

अथ द्वे इत्यत्राह कथं द्वे ऋचौ भवत इति । उच्यते । यदयमध्यर्द्धकारमिति सूत्रकारो ब्रवीति तेन गम्यते कृत्वा (?) द्वे ऋचौ भवतो न प्रकृतिदृष्टे इति ॥

## द्वे प्रथममुत्तमस्यामथाध्यर्धाम् ॥ २१ ॥

द्वे प्रथममुत्तमस्यामित्यत्र प्रथममिति न वक्तव्यम् । आनन्तर्योपदेशादेव सिध्यति । यत्रैकस्या ऋचोऽध्यर्द्धकारं विधीयते तत्र य एव प्रथमायामृचि दृष्टो विधिः स एव स्यान्नोत्तरायां दृष्ट इति । यथापोनप्त्रीयासु "अध्यर्द्धकारं प्रथमाम्" इति ।

अथाध्यर्द्धामित्यनुच्यमानेऽप्यर्थादेव सिद्धेऽप्यथाध्यर्द्धामिति ब्रुवन् ज्ञापयति अनुच्यमाने शेषस्य प्रकृत्या भवन्तीति । तस्मात्

"तस्यां प्रयाजानुयाजान्विभक्तिभिर्यजेत्" इत्यत्रोत्तमयोः प्रयाजानुयाजयोः प्रकृत्या प्रयोग इति ॥

## ताः पञ्चदशाभ्यस्ताभिः ॥ २२ ॥

आद्योत्तमयोस्त्रिर्वचनं विधाय पुनस्तदनन्तरं ताः पञ्चदशेत्येतावत्येवोच्यमानेऽप्यर्थादेवाभ्यस्ताभिरेव पञ्चदशत्वे सिद्धेऽपि पुनरभ्यस्ताभिरिति वचनमन्यत्राप्यभ्यासः संख्यायत इति ज्ञापनार्थम् । यथा "त्रीणि षष्टिशतान्याश्विनम्" इत्येवमादिषु । अथवाऽभ्यस्ताभिरिति प्रयुक्ता एवाभ्यस्ता संख्यायन्ते न प्रयुज्यमाना इत्येतदर्थम् । तस्मात् "सामिधेन्या वा वपते प्रागुपोत्तमायाः" इत्यत्राभ्यासो न संख्यायत इत्येतदर्थम् । तथा "एकभूयसीः शस्त्वा मरुत्वतीयां निविदं दध्यात्" इत्येवमादिषु चाभ्यासादृते एकभूयसीनां शंसनमिति ॥

## एतेन शस्त्रयाज्यानिगदानुवचनाभिष्टवनसंस्तवनानि ॥ २३ ॥

शस्त्रादीनां चोदनातः प्रसिद्धिः, निगदानां तु लक्षणातः न चोदनात इति । आचार्यश्च ज्ञापयति निगदानां तु लक्षणातः प्रसिद्धिरिति । यदयं "संयाज्ये अनिगदे", "अन्यत्राप्यनावाहने" इति निगदसंयाज्ययोः प्रकृतौ नियतं चोदितं न किंचिदपि विद्यते तथापि प्रतिषिध्यते च "संयाज्ये अनिगदे" इति । योऽयं याज्यायाः पूर्वग्रन्थः "षष्ठया विभक्त्या" इत्यादि "जुषतां हविः" इत्येतदन्तस्य प्रतिषेधः ।

तस्मान्मन्यामहे लक्षणातो निगदानां प्रसिद्धिरिति। ये याजुषा मन्त्रा अकर्मकरणा उच्चैःप्रयोगास्ते निगदा इति। यथा इडासूक्तवाक इत्येवमादयः।

## न त्वन्यत्राध्यर्धकारम् ॥ २४ ॥

प्रसङ्गेनाप्यध्यर्द्धकारं मा भूदित्येतदर्थं तुशब्दकरणम्। प्रमादात्कृते प्रायश्चित्तमेव भवति ॥

## न जपः प्रागभिहिंकारात् ॥ २५ ॥

प्राक् हिंकारादिति सिद्धेऽप्यभिहिंकारग्रहणं न कर्तव्यमिति। उच्यते। प्राक् हिंकारादिति उच्यमाने कौत्सस्य पक्षे भूर्भुवः स्वरित्यस्य प्रतिषेधः स्यात्। तन्मा भूदिति गुरुवचनम् ॥

## नाभिहिंकाराभ्यासाववहुषु प्रकृत्या ॥ २६ ॥

बहवश्च बहवश्च तेषु बहुष्विति। एवं निगदानामप्यबहुत्त्वादभिहिंकारोऽपि न भवति। याज्यानुवाक्यानामबहुत्वादभिहिंकाराभ्यासाभाव एतेन सिध्यति।

इहापि सामिधेनीभ्योऽन्यत्रेत्यनुवर्तते। तस्मात् "उशन्तस्त्वा निधीमहीत्येतां त्रिरनवानम्" इत्यत्र प्रकृत्याऽबहुष्वपि सामिधेनीत्वादभिहिंकारो भवत्येव। एवं चेत्तत्राभ्यासेनापि भवितव्यम्। तस्मात्प्रथमोत्तमयोरुभयोर्वचनं कर्त्तव्यमिति। उच्यते। यद्येतदिष्टं स्यादेकान्तामनवानं सप्तकृत्व इत्येवमवक्ष्यत्। तस्मान्न पुनरभ्यास

इति । आह । नैष दोषः । सप्तकृत्व इत्युक्तेऽपि पुनः प्रथमोत्तमयोरुभयोरभ्यासो भवत्येव । एवमेकादश भवन्ति । तस्मान्नायमर्थः । यद्येवं तत्र "ताः सामिधेन्यः" इत्यत्र ताग्रहणात्ता एव सामिधेन्यो न पुनरभ्यासः कर्त्तव्य इत्येतदर्थं क्रियते ।

प्रकृत्येत्यनुच्यमाने "उपविश्याभिहिंकृत्य परिव्ययणीयां त्रिः" इत्यत्र विकृत्या बहुत्वात्प्रथमोत्तमयोरुभयोः "त्रिः प्रथमोत्तमे अन्वाह" इति पुनरभ्यासः स्यात् । तन्निवृत्त्यर्थं प्रकृत्येत्युच्यते । तत्र विकृत्या[1] बहुत्वान्न भवति ॥

## नावच्छेदादौ ॥ २७ ॥

प्रवर्ग्ये उत्तरयाज्यया भक्षणेन च विच्छिन्नत्वादभीष्टवचनस्य पुनरुत्तरारम्भेऽभिहिंकाराभ्यासौ स्यातां तन्निवृत्त्यर्थमिति । यद्येवं पूर्वस्यावच्छेदस्यान्तेऽभ्यासः प्राप्नोति अवच्छेदान्तत्वात् । नैष दोषः । "सूयवसाद्भगवती हि भूया इति परिदध्यात्" इत्यत्रान्त्यायास्त्रिर्वचने उत्तमत्वादेव प्राप्तेऽपि पुनः परिदध्यादिति वचनं नियमार्थम् । एतयैव परिदध्यात् नार्थात्परिदध्यादिति ॥

## शस्त्रेष्वेव होत्रकाणामभिहिंकारः ॥ २८ ॥

नियमार्थमेतदारभ्यते । शस्त्रेष्वेव होत्रकाणामभिहिंकारो नान्यत्रेति । आह । एवकारादृतेऽपि नियमः सिध्यति । कथम् । सिद्धे विधिरारभ्यमाणो नियमाय भवति । नियमश्चान्यनिवर्त्तक

---

(१) तत्र विकृत्या B² B³, तत्राप्रकृत्या B¹.

इति । तत्रैतत्स्यात् । इष्टावधारणार्थमेवकारः क्रियते । इतरथा एवकारादृते शस्त्रेषु होत्रकाणामभिहिंकार इत्युच्यमाने होत्रकाणामेवाभिहिंकारो न होतुरिति एवमर्थो गृह्येत । तन्निवृत्त्यर्थमेवकारकरणमिति । आह । उत्तरत्र विरोधान्नायमर्थः । कथम् । "अनभिहिंकृत्य शोंसावोमित्युच्चैराहूय" इति आज्येऽभिहिंकारप्रतिषेधं कुर्वन् ज्ञापयति । शस्त्रेषु होतुरभिहिंकारः पूर्वं न प्रतिषिद्ध इति । तस्मान्नायमर्थ इति ।

तत्रैतदपि स्यात् । एवकारादृते उच्यमाने शस्त्रेषु होत्रकाणामभिहिंकार एव नाभ्यास इति एवमर्थो गृह्येत । तन्निवृत्त्यर्थमेवकारकरणमिति। अयमप्युत्तरविरोधादेव । नायमर्थः। कथम् । उत्तरत्र स्तोमातिशंसनार्थमावापे "पञ्च सप्तदशे । नवैकविंशे[1]" इति ब्रुवन् ज्ञापयति होत्रकाणामभ्यासः शस्त्रेषु विद्यत इति । इतरथा यद्यभ्यासो न स्या(+त्) नित्य आताने दशर्चे पञ्चसु प्रक्षिप्तास्वपि सप्तदशस्तोमस्यातिशंसनं नैव भवति, विधीयते च "पञ्च सप्तदशे" इति । तस्मादभ्यासेन सार्द्धं चतुर्दशर्च आतानो भवति[2] । तस्मिन् पञ्चसु प्रक्षिप्तासु सप्तदशस्यातिशंसनं भवति ।

तत्रैतदपि स्यात् । अक्रियमाण एवकारे प्रतिषेधाधिकाराद्धोत्रकाणां शस्त्रेष्वभिहिंकारस्य प्रतिषेधो विधीयत इत्येवमर्थो गृह्येत,

---

(१) पंच सप्तदशे नैकविंशे $B^1$, सप्तदश एकविंश $B^2$ सप्तदश एकविंश विंश $B^3$.

(२) $B^3$, भवंति $B^1$ $B^2$.

तन्निवृत्त्यर्थं नियमार्थमेवकारकरणमिति । तच्च नोपपद्यते । यदि प्रतिषेध इष्टः स्यादिहापि नञः प्रयोगमकरिष्यत् न शस्त्रेषु होत्रकाणामभिहिंकार इति । यथा पूर्वेषु वाक्येषु प्रतिवाक्यं नञः प्रयोगः क्रियते "न त्वन्यत्राध्यर्द्धकारम्" इति, तद्वदिहापीति । तस्मान्नायमर्थ इति ।

उच्यते । एवकारादृतेऽस्य वाक्यस्य विधित्वमेव स्यान्न नियमः–शस्त्रे होत्रकाणामभिहिंकारः सर्वत्र भवत्येवेति । तथा सति "प्रातरनभ्यासमनभिहिंकृतानि" इत्यत्राभिहिंकारस्य प्रतिषेधविषये इह पुनर्विधानसामर्थ्यात् होत्रकाणां शस्त्रेष्वभिहिंकारः स्यात् । यथा "वाजिभ्यो वाजिनमनावाह्याऽऽदेशम्" इत्यत्रादेशस्य सिद्धस्यापि "सर्वाश्चानुवाक्यावत्योऽप्रैषाः" इति पुनर्विधानसामर्थ्यात् प्रतिषेधादेशेऽपि प्रातःसवने प्राप्तिर्भवति, तद्वदभिहिंकारोऽपि प्रतिषेधविषयेऽपिस्यात् । तन्मा भूत् । अस्य वाक्यस्य कथं नियमत्वमेव स्यादित्येतदर्थमेवकारः क्रियते ।

अत्र केचिद्वर्णयन्ति।एवकारकरणाद्ये शस्त्रिणो होत्रकास्तेषामेव शस्त्रेभ्यो नान्यत्रापि[1] हिंकारप्रतिषेधमनाशस्त्रिण[2] इति। तस्माद् ग्रावस्तोत्रेऽभिष्टवने ग्रावस्तुतोऽभिहिंकारो भवतीति । आचार्यश्च ज्ञापयतीति ग्रावस्तुतोऽभिहिंकारो भवतीति, यदयम् "प्रातरनभ्यासमनभिहिंकृतानि" इत्यत्राभिष्टवनग्रहणं करोति । यदि ग्रावस्तोत्रेऽभि-

---

( १ ) B¹, नान्यत्र B² B³.
( २ ) B¹ B² B³.

हिंकारः पूर्वसिद्धो न[1] स्यात्तत्राभिष्टवनग्रहणमपार्थकं स्यात् । कथम् । पूर्वमेवानेन सूत्रेण हिंकारः(?) प्रतिषेधो न यदि स्यात् ग्रावस्तोत्रादन्यदभिष्टवनं सुत्यायां न विद्यते । तस्मादभिष्टवनग्रहणसामर्थ्यात् ग्रावस्तुतोऽभिहिंकारः पूर्वमेव प्राप्त इति सिद्धम्। नैतदस्ति प्रयोजनम्। सुत्यायामपि केचित्पूर्वाह्णेऽपराह्णे च प्रवर्ग्यौ कुर्वन्ति तत्र होतुरभिष्टवनेऽभिहिंकारप्रतिषेधार्थमभिष्टवनग्रहणं कृतं न ग्रावस्तुत्यर्थम् । किञ्चान्यत् । ग्रावस्तोत्रेऽप्यभ्यासप्रतिषेधार्थमभिष्टवनग्रहणं कृतमिति मन्तव्यम् । पर्जन्यवल्लक्षणप्रवृत्तिरिति । तस्मात्पूर्वोक्त एवार्थ इति ॥

**सामिधेनीनामुत्तमेन प्रणवेनाग्ने महाँ असि ब्राह्मणभारतेति निगदेऽवसाय ॥ २९ ॥**

सामिधेन्यधिकारे पुनः सामिधेनीनामिति वचनं शस्त्रादिभिर्व्यवहितत्वात्सामिधेन्यधिकारो विच्छिन्नः । तस्मात्पुनः सामिधेनीग्रहणं कृतमित्येके। नैतदस्ति प्रयोजनम् । प्रकृतप्रसङ्गोऽतिवर्तते[2]। यत्प्रसङ्गेनोक्तं तत्तत्रैवावतिष्ठते । पुनरपि मूलाधिकार एव वर्तत इति । यथा "मरुत्वतीयं शस्त्रं शंसेत्" इति मरुत्वतीयाधिकारे पुनः "आतोऽर्धर्चं सर्वम्" इत्येतदादि सर्वशस्त्राणां सामान्यं विधाय पुनराह "अग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यप इति धाय्याः" इति

(१) पूर्वसिद्धो न B² B³, पूर्वप्राप्त इति सिद्धे तेन B¹.
(२) B¹, निवर्तते B² B³.

तु पुनर्मरुत्वतीयग्रहणं क्रियते तथापि धाय्या[1] मरुत्वतीयस्य प्रकृतत्वान्मरुत्वतीय एव भवति। न सर्वत्र । तद्वदिहापि सिद्धे पुनरिह सामिधेनीग्रहणमुत्तमेन प्रणवेन संतानार्थम् । इतरथा "समाप्तौ प्रणवेनावसानम्"इत्यवसानार्थं स्यात् । तन्निवृत्त्यर्थं वचनम् । निगदग्रहणं प्रदर्शनार्थम् । ईदृग्विधा याजुषमन्त्रा अवशिष्टसंज्ञां गता[2] इति ॥

( इति द्वितीया कण्डिका । )



( १ ) B² B³, धाय्ये B¹.

( २ ) B¹. ईदृग्विधयजुषां मन्त्राणां अविशिष्टसंज्ञास्ते निगदा (गदा B²) B² B³.

**यजमानस्याऽऽर्षेयान्प्रवृणीते यावन्तः स्युः ॥ १ ॥**

यावन्तः स्युरिति वचनम् "नैकं वृणीते" इत्येकार्षेयाणां श्रुतौ प्रवरप्रतिषेधे सत्यप्येकार्षेयाणामपि प्रवरणार्थं यावन्तः स्युरिति वचनम् । अथवाऽस्माकं प्रवरणकाण्डे कालेयादी[1]नामप्यसमाम्नातानां प्रवरणार्थम् । अथवा "त्रीन् वृणीते मन्त्रकृतो वृणीते" इति श्रुतेः पञ्चार्षेयाणामपि प्रवरणं न[2] स्यात् । कौषीतकिनामपि वचनम् "यजमानस्य त्रीनार्षेयान्वृणीते" इति । इतरथाऽस्माकं पञ्चार्षेयाणामपि प्रवरणार्थं यावन्तः स्युरिति वचनम् ॥

**परं परं प्रथमम् ॥ २ ॥**

यथा प्रवराम्नाये पाठे दर्शनात्संबुध्या प्रवरणं भवति, यथा[3] चैते पञ्चार्षेयाः परे त्र्यार्षेया इत्ययं विभागः सूत्रपाठदर्शनादेव सिध्यति, तद्वत्पाठादेव प्रवरस्य प्रवरणे सिद्धेऽपि पुनरिह वचनं द्विप्रवाचनार्थम् । यदा द्विप्रवाचनार्थमुभयतः प्रवरणं तदा पूर्वस्मात्प्रवरणपक्षात्पूर्वः पूर्वो[4] ग्राह्यः इतरस्मादपरोऽपरो ग्राह्य इत्यर्थात्सिद्धम् । इतरथा अनियमः स्यात्तन्निवृत्त्यर्थम् ।

अथ मतम् । "आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति" दर्शनादेवायमर्थः सिध्यति । नैष दोषः । तत्राऽपरस्य वा प्रथमं

(१) - दी omitted in $B^1$.

(२) न omitted in $B^2$ $B^8$.

(३) तथा $B^1$. (४) पुरो $B^1$.

प्रवरे सिद्धेऽपि अन्यतरेण प्रदर्शनं क्रियते इत्येत्रमर्थो गृह्येत। तन्निवृत्त्यर्थं वचनम्। प्रवरो ह नामधेयान्य[1] मन्त्रा इति सिद्धान्तस्तथापि प्रवरणवाक्ये निगदेऽवसायेति निगदमध्ये पतितत्वान्निगदधर्मप्राप्तिः। तदर्थं च तत्र निगदग्रहणम्। तस्मादेकश्रुत्यस्मुच्चैष्ट्वं भवति प्रवरस्यापि[2] ॥

[ पौरोहित्यान् राजविशाम् ॥ ३ ॥ ]

[ राजर्षीन्वा राज्ञाम् ॥ ४ ॥ ]

[ सर्वेषां मानवेति संशये ॥ ५ ॥ ]

[ देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाळित्यवसायास्पात्रं जुहूर्देवानां चमसो देवपानो राँ इवाग्ने नेमिर्देवांस्त्वं परिभूरसि ] आ वह देवान् यजमानायेति प्रतिपद्य देवता द्वितीयया विभक्त्यादेशमादेशमा वहेत्यावाहयत्यादिं प्लावयन् ॥ ६ ॥

"आ वह देवान्यजमानाय" इत्यस्य च "अग्ने महां असि"

---

( १ ) -ति-for-न्य- in B² B³.

( २ ) प्रवरस्यापि omitted in B¹.

त्येवमादेर्मन्त्रस्य प्रतिपत्तिसंज्ञार्थं प्रतिपद्येत्युच्यते । संज्ञाप्रयोजनम् "आ वह देवान्पितॄन्यजमानाय" इत्यत्रास्याः[1] समानजातीयत्वादपाय इति ।

"कर्मणि द्वितीया" ( अष्टा० २।३।२ ) इति लक्षणात एव द्वितीयायां सिद्धायामपि पुनरिह द्वितीयया विभक्त्येति वचनं नियमार्थम् । कथम् । यत्र द्वितीयया विभक्त्या देवतामादिश्य पश्चादावहशब्दः प्रयुज्यते तत्रैवादिप्लावनम् । नान्यत्रेति । तस्मात् "आ वह देवान्यजमानाय आ वह जातवेदः" इत्यावहशब्दस्य न प्लुतिः ।

आदेशमादेशमिति द्विरादेशग्रहणं प्रतिदेवतमावहशब्दस्यावृत्त्यर्थम् । इतरथा सकृद्वा प्रतिदेवतं वेत्यनियमः स्यात् । तन्निवृत्त्यर्थं वचनम् । अथवैकपदानामसमासेनादेशार्थं द्विरादेशग्रहणमिति ।

प्रतिपद्य देवता इति देवताग्रहणं वक्ष्यमाणानामाज्यभागादीनां देवतासंज्ञार्थम् । संज्ञाप्रयोजनम् "उक्ता देवताः" इत्येवमादिषु ॥

**[अग्न आवहेति तु प्रथमदेवताम् ॥ ७ ॥]**

**[अग्निं सोममित्याज्यभागौ ॥ ८ ॥]**

**अग्निमग्नीषोमाविति पौर्णमास्याम् ॥ ९ ॥**

**अग्नीषोमयोः स्थान इन्द्राग्नी अमावास्यायामसंनयतः ॥ १० ॥**

---

( १ ) इत्यस्याः B² B³.

असंनयतोऽग्न्य[1]नुकर्षणार्थमग्नीषोमयोः स्थान इत्युच्यते, इष्यते च तत्राप्यग्निर्नित्य एव कथं स्यात् । तस्मादिहाग्नीषोमयोः स्थान इत्युच्यते ।

आह । असंनयत इति न वक्तव्यम् । कस्मात् । उत्तरसूत्रे संनयत इति वचनादिहासंनयत इत्यनुच्यमानेऽपि परिशेषादिह असंनयत इत्यवगम्यते । उच्यते । बाढमवगम्यत एव । किंत्विहासंनयत इत्यनुच्यमाने अमावास्यायां यद्विधातव्यं तत्परिसमाप्तं भवति । तथा सति उत्तरस्मिन्सूत्रे विधीयमानं तदुभयोर्दर्शपूर्णमासयोरपि स्यात् । तथा सति पौर्णमासेऽपि संनयत इन्द्रो महेन्द्रो वा प्रसज्येत । तच्च नेष्यते । तस्मिन्सूत्रे पुनरसन्नयत इत्युच्यमाने त्वमावास्यायां विधिर[2]परिसमाप्तो भवति । कथम् । सन्नयतोऽविहितत्वात् । तथा सत्युत्तरसूत्रे विधानममावास्यायामेव भविष्यति । तस्मादिहासंनयत इत्युच्यते ।

आह । असंनयत इत्यक्रियमाणेऽपि सन्नयत इत्येतद्विधानमर्थादमावास्यायामेव भवति । न पौर्णमास्याम् । कुतः । पौर्णमास्यां सान्नायाभावादेवेति । उच्यते । नैष दोषः । सन्नयत इति पुरुषपरवाक्यस्य[3] पौर्णमास्यां सान्नाय्याभावेऽपि सन्नयन्निति प्राप्नोत्येव । कथम् । यो दधि पयसि सन्नयति स सन्नयन्नित्युच्यते । तस्य सन्नयतो यजमानस्येति । योऽमावास्यायां सन्नयन्

---

( १ ) असंनयत अग्न्य- B1, अस्त्य- B2 B3.

( २ ) विधि- ( for विधिर ) B2 B3.

( ३ ) -परत्वाद्वाक्यस्य B1.

स पौर्णमास्यामपि तत्र सान्नायाभावेऽपि सन्नयतीत्युच्यते ॥

[ इन्द्रं महेन्द्रं वा सन्नयतः ॥ ११ ॥ ]

अन्तरेण हविषी विष्णुमुपांश्वैतरेयिणः ॥ १२ ॥

हविषी देवते इत्यर्थः । तस्य ज्ञापकम् "अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकान्यदितिः" इत्यत्र[1] पूर्वं देवताश्चोदयित्वा पुनर्वैकल्पिकानीति यदि[2] हविःपदं नपुंसकनिर्देशं करोति तेन देवते हविषी इत्यनर्थान्तरमिति सिद्धम् ॥

अग्नीषोमीयं पौर्णमास्यां तैषएवममावास्यायामेके नैके कश्चन ॥ १३ ॥

नैक इत्येतावता सिद्धे कश्चन इति वचनं शास्त्रान्तरविहितानां प्राजापत्यादीनामप्युपांशुयाजानां प्रतिषेधार्थम् ॥

अन्येषामप्युपांशूनामावह स्वाहाऽयाट् प्रिया धामानोदं हविर्महो ज्याय इत्युच्चैः ॥ १४ ॥

आवहादीनामुच्चैष्ट्वविधानं संज्ञाकरणार्थम् । संज्ञाप्रयोजनं "तन्त्रस्वराण्युपांशोरुक्तानि" इत्यत्र एतेषामपि ग्रहणार्थम् । अन्येषामिति वचनमुपांशुतन्त्रास्विष्टिषु तान्त्रिकाणामपि देवतानामावहादीन्युच्चैरेव प्रयोक्तव्यानि कथं स्युरित्येतदर्थम् ॥

---

(१) B[1], वैकल्पिकानीत्यत्र B[3], B[2] ( -नि-for-नी in B[2] ).
(२) यदि B[2] B[3], यद्य B[1],

येऽन्ये तद्वचनाः परोक्षास्तानुपांशूच्चैर्वा ॥ १५ ॥

अन्यच्छ(१ = अन्यश-)ब्दस्य[1] सापेक्षत्वादिहेष्टीनामावहा- दीनि पूर्वमुक्त्वा पुनरन्य इति वचनादावाहनादिषु चतुर्षु निगदेषु ये शिष्टाः परोक्षशब्दा अजुषतेत्येवमादयस्त एव गृह्यन्ते नान्य इति । तस्मात्पशौ मेधपतिशब्दस्य न विकल्प इति ॥

प्रत्यक्षमुपांशु ॥ १६ ॥

प्रत्यक्षमिति पुरोडाशादीनि हवींषि गृह्यन्ते । उपांशुत्वस्य हविष्ट्वासम्भवात् तद्गुणकयोर्याज्यानुवाक्ययोरुपांशुत्वं भवति । एतस्मिन्ननुच्यमाने देवताशब्दस्यैवोपांशुत्वं स्यात्तन्निवृत्त्यर्थं वचनम् ।

प्रतिचोदनमावाहनम् ॥ १७ ॥

परस्परमसन्धायासन्धाय विरम्य विरम्यावाहनं कर्तव्यम् ॥

[ सर्वा आदिश्य सकृदेकप्रदानाः ॥ १८ ॥ ]

तथोत्तरेषु निगमेष्वेकामिव संस्तुयात् ॥ १९ ॥

तथेत्यनुच्यमाने एकामिवेति वचनात् बह्वीनामप्येकं वचनं प्रस- ज्येत तन्मा भूत् । स्वाहादीनां सकृत् प्रयोगमात्रमेव विधीयते नत्वे- कवचनमित्येतदर्थं तथेत्युच्यते ।

---

(१) अन्यच्छब्दस्य B[1] B[2] B[3].

एकामिव संस्तुयादित्यनुच्यमाने तथेति वचनाद्यथाऽऽवहशब्दः सर्वा देवता आदिश्य पश्चात्प्रयुज्यते, तथा स्वाहाऽयाट्शब्दयोरपि देवतायाः पश्चात्प्रयोगः प्रसज्येत । तन्निवृत्त्यर्थमेकामिवेत्युच्यते । यथैकस्या देवतायाः सकृदावाहनशब्दः, तथा स्वाहादीनामपि सकृत्प्रयोगमात्रमेव विधीयते न क्रम इति । तस्मात्स्वाहाऽयाट्शब्दौ तु पूर्वमेव भवतः ॥

## समानां देवतां समानार्थाम् । अव्यवहितां सकृन्निगमेषु ॥ २० ॥

"यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इत्यस्योदाहरणम् । समानार्थामित्यर्थग्रहणेन प्रयोजनं हविःप्रदानमित्येवमादि सर्वं परिगृह्यते । पौर्णमासेऽग्नीषोमीयस्योपांशुयाजपक्षे द्विरग्नीषोमावप्यव्यवहितौ प्राप्नुतः । तत्र स्वरभेदात्प्रदानभेदाच्च पृथगुपलक्षणं कर्तव्यम् । असन्नयतो यदामावास्यायामाग्रयणहविषामनुवर्तनं तदा द्विरिन्द्राग्नी प्राप्नुतः[1] । तत्र प्रथममैन्द्राग्नं स्वर्गप्रयोजनम् । उत्तरं नवान्नसंस्कारप्रयोजनम् । तस्मात्पृथगुपलक्षणमिति । तस्मात् "आजस्वते पुरोळाशमष्टाकपालं निर्वपेत्सौम्यं चरुमग्नये आजस्वते" इत्यत्र सूर्यव्यवधानात् द्वयोर्भ्राजस्वतोर्द्विरुपलक्षणं कर्तव्यमिति । इह श्लोकः[2]—

"अर्थान्यत्वात्स्वरान्यत्वात् गुणरूपापि देवता ।

---

(१) B¹ B² B³ read प्राप्नुवतः.

(२) B¹ B² B³ read श्लोकाः.

अन्यया द्वन्द्वभावाच्च एका नानात्वमिच्छति" ॥ इति

उत्तमेषु निगमेष्विति । निगमाधिकारे पुनरिह निगमेष्विति वचनमावाहनस्य परिग्रहणार्थम् । इतरथोत्तराधिकारादावाहने न स्यात्तन्मा भूदिति ।

इहाप्येकामिव संस्तुयादित्यनुवर्तते । तस्माद् बहुष्वपि वारुणेषु वरुणमावहेत्येकवचनेन प्रयोगः कर्त्तव्यः ॥

**ओऽ्हास्वावापिकासु देवाँ आज्यपाँ आवहाग्निं होत्रायाऽऽवह स्वं महिमानमावहाऽऽ वह जातवेदः सुयजा यजेति ॥ २१ ॥**

ओऽ्हास्वावापिकास्वित्यनुच्यमाने "देवतागमे नित्यानामपायो याः स्विष्टकृतमन्तराज्यभागौ च" इत्यत्र स्विष्टकृतः प्रागावाहितत्वादाज्यपानामप्यपायः स्यात्तन्निवृत्त्यर्थमाज्यपानां नित्यमोऽ्हास्वावापिकास्वित्युच्यते ।

"देवाँ आज्यपाँ आवह" इति प्रयाजानुयाजदेवतानामावाहनम् । यस्यामिष्टौ प्रयाजानुयाजा न विद्यन्ते तत्र तस्याप्यपायः । केचित्तत्रापि पूर्वं त्वावाहननिगदस्य स्वभावोऽयं[1] नात्र देवता कारणं भवतीति वदन्ति ।

अग्निं होत्रायावह शब्दयोः सन्धौ तु "अकः सवर्णे दीर्घः" (अष्टा० ६।१।१०१) इति पूर्वस्याकारस्य "एकः पूर्वपरयोः"

(१) B¹ B², स्वभागोऽयं B³.

( अष्टा० ६ । १ । ८० ) इति च परेण प्लुतेन वा दीर्घभावः । तस्मात् "अग्निं होत्रायावह" इत्यत्राप्लुतेन प्रयोगः कर्त्तव्य इति। ऐतरेयिकाणां व्यक्तमेतत् । "अग्निं होत्रायावहेत्येतद्वर्जम्" इति ।

"स्वं महिमानम्" इति स्विष्टकृतो महिमा । आहवनीयस्य महिमेत्येके । किञ्चाहवनीयस्य पक्षे इहाहवनीययागाभावान्महिम्नोऽपि यागो न सिध्यति ॥

आवाह्य यथास्थितमूर्ध्वजानुरुपविश्योदग्वेदेर्व्यूह्य तृणानि भूमौ प्रादेशं कुर्यात् ।

[अदितिर्माताऽस्यान्तरिक्षान्मा च्छेत्सीरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथन्तरेण साम्ना गायत्रेण च्छन्दसाऽग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं हन्मीति ] ॥ २२ ॥

आवाह्य यथास्थिततयोर्ध्वजानुरुपविश्योदग्वेदेर्व्यूह्य[1] तृणानि अन्तर्वेदिभूमौ प्रादेशं कुर्यात् "अदितिः" इत्यनेन। भूमावित्यनुच्यमाने यानि तृणान्युदग्व्यूह्यानि तेषु प्रादेशं कुर्यात् । तन्निवृत्त्यर्थं भूमाविति वचनम् । तस्मात् भूमेरपनिष्क्रयार्थं तृणव्यूहनमिति मन्तव्यम् ।

इह किञ्चिद्विचारयिष्यामः । पूर्वं मन्त्रमुक्त्वा पश्चात्तत्कर्म

(१) $B^1$ $B^3$, व्युह्य $B^2$.

कर्त्तव्यम् , आहोस्वित्कर्मान्ते मन्त्र इति । तत्र केचित्प्रतिपन्नाः । पूर्वं कर्म विहितं पश्चान्मन्त्रः, तत्र पूर्वमेव कर्म कृत्वा पश्चान्मन्त्र इति ॥

आश्रावयिष्यन्तमनुमन्त्रयेताऽऽश्रावय यज्ञं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसायेति । प्रवृणानं देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताऽहं मानुष इति ॥ २३ ॥

यजमानस्यार्षेयान्प्रवृणानमध्वर्युमनुमन्त्रयेत "देव सवितः" इत्यनेन मन्त्रेण ॥

मानुष इत्यध्वर्योः श्रुत्वोदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अन्वित्युत्तिष्ठेत् । षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः । सिनन्ति पाकमति धीर एतीत्युत्थाय ॥ २४ ॥

अध्वर्योर्मानुष इति श्रुत्वा "उदायुषा" इत्यनेन मन्त्रेणोत्तिष्ठेद्यथा आश्रावयिष्यन्तमनुमन्त्रयेतेति । अध्वर्युग्रहणेऽक्रियमाणेऽप्यध्वर्योरेव संप्रत्ययो भवति तथाऽप्यध्वर्युग्रहणात्कृतेऽपि सिद्धेऽप्यध्वर्योः श्रुत्वेति अध्वर्युग्रहणमुत्तरसूत्रार्थम् । कथमन्वारम्भणेऽध्वर्युमेवान्वारभेत न

प्रतिप्रस्थातारमिति। इतरथा वरुणप्रघासेषु प्रतिप्रस्थातुरप्यन्वारम्भणं स्यात्। सोऽपि तत्र दक्षिणस्यां वेद्यामध्वर्युकर्म करोति। तन्मा भूदित्यध्वर्युग्रहणम्।

उत्थायेत्यनुच्यमाने "षष्टिश्चाध्वर्यो" इत्ययमुत्थानमन्त्रः स्याद्स्य मन्त्रस्यान्यकर्मदर्शनात्। तन्मा भूत्। उत्थाय पुनर्वक्तव्योऽन्यः कश्चिन्मन्त्रः, न कर्मकरण इति ज्ञापनार्थमुत्थायेति वचनम्। अप्युत्थानमन्त्रत्वं यदी[1]ष्टं स्याद्यथा 'उदायुषा' इत्येतस्योत्थानकर्मणः पूर्वं विधानं क्रियते, तद्वदेतमपि मन्त्रमुक्त्वा पश्चादुत्तिष्ठेदित्येवमवक्ष्यत्।

स्कन्दस्वामिनस्त्वेतमप्युत्थानमन्त्रं मन्यन्ते। ते ब्रुवते। पूर्वो मन्त्र उत्थानात्पूर्वं प्रयोक्तव्यः, अयं पश्चादुत्थाय प्रयोक्तव्यः। एवमुभयोरपि कर्मकरणत्वमेव, काल एव विशिष्ट[2] इति। य(१+द्य)मु[3]त्थानमन्त्रो न स्यादकर्मकरणत्वादस्योपांशुत्वं न स्यात्। तस्मादयमप्युत्थानमन्त्र एवेति।

केचित्त्वनुत्थानमन्त्रपक्षेऽपि अस्योपांशुत्वप्रसाधनार्थं "प्रेषितो जपति" इत्यत्र जपतिग्रहणमिहापि मण्डूकप्लुतिन्यायेनानुवर्तयन्ति उत्थाय जपति।

वयं तु ब्रूमः। "मन्त्राश्च" इति योगविभागान्मन्त्रत्वादस्योपांशुत्वमिति॥

**ऋतस्य पन्थामन्वेमि होतेत्यभिक्रम्यांसेऽध्व-**

---

(१) B³,-दि-B¹ B².

(२) काल एव विशिष्ट B³, काल एव विशि-B², विशिष्टयति B¹. (३) यमु-B¹, यद्यु-B² B³.

युंमन्वारभेत पार्श्वस्थेन पाणिना । आग्नीध्रमङ्कदेशेन सव्येन वा । इन्द्रमन्वारभामहे होतृवूर्ये पुरोहितम् । येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति ॥ २५ ॥

इह पुनरध्वर्युग्रहणमाग्नीध्रीयमिति[1] विवक्षया क्रियते । इतरथा अध्वर्युग्रहणेऽक्रियमाणे आग्नीध्रस्यैवान्वारम्भणं स्यान्नाध्वर्योः । तन्मा भूदिति । दक्षिणस्य पाणेरध्वर्य्वन्वारम्भणे व्यापृतत्वात्सव्येनेति । सव्येनाग्नीध्रान्वारम्भणं विदधत् ज्ञापयति । उभयोः सहैवान्वारम्भणमिति । तस्मादकालभेदादुभयोरपि सकृदेव मन्त्रः । यदा सव्येनान्वारम्भणं तदाग्नीध्रमपि दक्षिणांस एवालभेत ॥

[संमार्गतृणैस्त्रिरभ्यात्मं मुखं संमृजीत संमार्गोऽसि सं मां प्रजया पशुभिर्मृड्ढीति ॥ २६ ॥]

[सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ २७ ॥]

सर्वत्रैवं कर्मावृत्तौ ॥ २८ ॥

"प्रपदेन दक्षिणा पांसूँस्त्रिः", "पुनर्ज्वलता परिहरेत्त्रिः" इत्येवमादीन्युदाहरणानि। कर्मावृत्तावित्येतावता सिद्धेऽप्येवमिति वचनं संस्कारा-

---

( १ ) B[1], इहार्थत्वं नाध्वर्युग्रहणमाग्नीध्रमिति B[3] B[2] (-प्रमिति for-मिति B[2] ).

र्थेषु त्रिः कर्मावृत्तिरिति[1] विशेषणार्थम् । त्रिः "सर्वदेवजनेभ्यः स्वाहा" (आश्व० गृ० २।१।१४) इत्येवमादिषु प्रधानकर्मसु त्रिरपि मन्त्रावृत्तिर्भवति । तस्य ज्ञापकम् "तिस्रस्तिस्र उदङ्मुखास्तिष्ठन्प्रथमां समन्त्राम्" इति वचनम् । कथं कृत्वा ज्ञापकं भवति। उच्यते। यदि प्रधानकर्मस्वियं[2] परिभाषा स्यात् "सकृन्मन्त्रेण द्विस्तूष्णीम्" इति तत्रापि प्राप्नोति । तथा सत्युत्तरयोः समिधोर्मन्त्रप्रतिषेधार्थं प्रथमां समन्त्रामिति यत्नोऽपार्थकं[3] स्यात्। तस्मात् ज्ञापकमेव भवितुमर्हति ॥

**स्पृष्ट्वोदकं होतृषदनमभिमन्त्रयेताहेदैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इति ॥ २९ ॥**

अभिमृश्य मन्त्रणमभिमन्त्रणमिति । कस्मात् । मन्त्रादावालभ्याभिमर्शनमन्त्रस्य प्रवृत्तिर्भवति । तस्य ज्ञापकं श्रुतौ "आच्य जानु दक्षिणमभिमन्त्रयत उभाभ्यां पाणिभ्यामालभ्य" (ऐ०ब्रा० ८।६)इति वचनम्। इहापि स्पर्शनं पूर्वाङ्गम्। केचित्तूत्तराङ्गं मन्यन्ते। ते उदकमस्पृष्ट्वैव प्रवृताहुतिहोमं हुत्वा पश्चाद्धोतृषदनाभिमर्शनकाले उदकोपस्पर्शनं कुर्वन्ति। ये तु पूर्वाङ्गं मन्यन्ते ते स्पृष्ट्वोदकं पश्चात्प्रवृताहुतीर्जुह्वति ॥

**अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्य-**

(१)-रिति B³ B², omitted in B¹.
(२) कर्मस्वयं B² B³, कर्मस्यापि यं B¹.
(३)-र्थकं B¹ B² B³.

**ग्दक्षिणा निरस्तेन्निरस्तः परावसुरितोदमहमर्वावसोः सदने सीदामीत्युपविशेद् दक्षिणोत्तरिणोपस्थेन ॥ ३० ॥**

होतृषदनाधिकारे पुनर्होतृषदनग्रहणमिदं तृणस्य निरसनं न देशसंस्कारस्तृणमयस्यासनस्य संस्कार इति ज्ञापनार्थम् । तस्मादापराह्णिके प्रवर्ग्येऽन्यत्तृणमयमासनं पूर्वस्मिन्नेव देशेऽध्वर्यवः[1] कल्पयन्ति । तस्मात्तृणभेदात्पुनरपि निरसनोपवेशने कर्त्तव्ये । यदि देशसंस्कारः स्यात्स एव देश इति कृत्वा तत्र निरसनोपवेशने न स्याताम् । तन्निवृत्त्यर्थं वचनम् । किञ्चान्यत् । सर्वत्र[2] प्रकृतेष्वेवोपस्पर्शनमिति च[3] सिध्यति । यत्र तु तृणेषूपवेशनं तत्र निरसनोपवेशने भवत इति च सिद्धम् , नान्यत्र, यथा "हिरण्यकशिपावासीनोऽभिषिक्ताय" इति । यत्राध्वर्यवोऽग्निं परिस्तृणन्ति तत्रासनानामपि तृणभेदो भवतीति मन्तव्यम् ॥

**एते निरसनोपवेशने सर्वासनेषु सर्वेषामहरहः प्रथमोपवेशनेऽपि समाने ॥ ३१ ॥**

एते इति समन्त्रके इत्यर्थः । अथवैते इति निरसनोपवेशनयोः

---

( १ ) देशेऽध्वर्यवः $B^1$, यदध्वर्यवः $B^3$, यध्वर्यवः $B^2$.
( २ ) सर्वत्र प्र–$B^2$ $B^3$, सर्वत्राप्र–$B^1$.
( ३ ) च $B^1$, omitted in $B^2$ $B^3$.

सह निर्देशः क्रियते साहचर्यार्थम् । सह वा प्रवृत्तिः सह वा निवृत्तिरिति । तस्मात् "अनिरस्य तृणम्" इत्यत्र उपवेशनमन्त्रोऽपि न भवति ।

सर्वासनेष्विति वचनं देशभेदे पुनरन्यस्मिन्देशे करणार्थम् । इतरथा प्रथमोपवेशन इति वचनाद्यद्यपि देशो भिन्नस्तथापि पुनरुपवेशनस्य द्वितीयत्वान्न[1] स्यातां निरसनोपवेशने । तन्मा भूदिति । तस्माद्बहिष्पवमाने प्रशास्तृब्रह्माणौ निरसनोपवेशने कृत्वा पुनः सदस्यपि कुर्वाते ।

सर्वेष्वित्येवोच्यमानेऽप्यधिकारादेवासनेष्विति सिद्धे पुनरासनेष्विति वचनं चोदितेष्वेवासनेषु कथं स्यातां नार्थप्राप्तेष्विति । तस्मात् "चात्वाले मार्जयन्ते" इत्येवमादिषूपवेशनेषु न भवतः ।

अहरहरित्यनुच्यमानेऽहर्गणे प्रतिसुत्यं न स्याताम् । कुतः । तृणभेदाभावादौपवसथ्येऽहन्यध्वर्युभिः परिकल्पितानि तृणानि अहर्गणपरिसमाप्तेस्तान्येव तृणानि भवन्ति । यद्यपि तान्येव तृणानि तथापि प्रत्यहं समानेऽप्यासने प्रथमोपवेशने पुनः पुनर्निरसनोपवेशने कर्त्तव्ये एवेत्येतदर्थमहरहरित्युच्यते । तस्मादौपवसथ्येऽहनि यूपाञ्जनकाले निरसनोपवेशने यद्यपि कृते तथापि पुनः प्रातः "उपविश्याग्निहिंकृत्य परिव्ययणीयां त्रिः" इत्यत्रापि तस्मिन्नेव देशे तेष्वेव तृणेषु भवतः अहरहरिति वचनसामर्थ्यात् ॥

## द्विरिति गौतमः ॥ ३२ ॥

( इति तृतीया कण्डिका । )

---

(१) B[1], द्वितीयस्यान्न B[2], द्वितीयस्य न B[3].

## ब्रह्मौदने प्राशिष्यमाणेऽग्न्याधेये ब्रह्मा ॥ १ ॥

अश्वमेधादिषु ब्रह्मौदने प्राशिष्यमाणे मा भूदित्यग्न्याधेय-ग्रहणम् ॥

## बहिष्पवमानात्प्रत्येत्य सोमे ॥ २ ॥

सोमग्रहणं सर्वसोमार्थम्[1] । इतरथाग्न्याधेयाधिकारादग्न्याधेयसंज्ञके सोमे स्याताम् । तन्मा भूदिति । अग्न्याधेयसंज्ञकोऽपि सोमः कश्चिदस्तीति ॥

## [प्रसृप्य ॥ ३ ॥]

प्रसृप्य सर्वे निरसनोपवेशने कुर्युः । "यथास्वं धिष्ण्यानां पश्चादुपविश्य जपन्ति" इत्यत्र प्राप्तं द्वितीयादिष्वहस्सु बहिष्पवमानेनान्तः[2]सदसि स्तुवते । तत्र प्रशास्तृब्रह्मणो(?+२)[3] बहिष्पवमानार्थं पूर्वं सदसि कृतयोर्निरसनोत्रवेशनयोरपि पुनः प्रसर्पणकालेऽपि भवतः । तथा होतुश्च[4] तृतीये भवतः ॥

## होता स्रुगादापने पशौ ॥ ४ ॥

---

( १ ) B¹, सर्वसोमग्रहणार्थं B² B³.

( २ ) B¹,-मानं अंतः-B³,-मानस अनंत-B².

( ३ ) प्रशस्तृब्रह्मणो B¹, B³, प्रशास्त्रे ब्राह्मणो B².

( ४ ) B³, होमश्च B¹ B².

पशुग्रहणात्पशुनिमित्तके द्वितीय एव स्रुगादापने भवतः । उत्क्रमादापनमिति ॥

अत्र केचित्पूर्वोक्तं सोमग्रहणमिह योजयन्ति । सोमे पशाविति । सवनीय एव पशौ स्रुगादापने भवत इति केचित् ।

प्रसृप्य होतुस्तृतीयमुपवेशनं भवति तस्मिन्नेव देशे । कथम् । स्पृष्ट्वोदकमिति तान्त्रिकमुपवेशनम् । पुनः स्रुगादापने पशाविति द्वितीयम् । पुनः प्रसृप्य होतेति तृतीयम् । तस्माद्यदि गौतमपक्ष इष्टः स्यात्प्रसृप्य होता त्रिरित्यवक्ष्यत् । तस्मात्संख्याग्रहणाभावादाचार्यपक्ष एवायं[1] नित्यश्चेत्येवं वर्ण्यमाने द्वितीयादिष्वहस्सु प्रशास्तृब्रह्मणोः प्रसर्पणे न प्राप्नुतः बहिष्पवमाने सदस्येव कृतत्वादिति ॥

[ न पत्नीसांयाजिके ॥ ५ ॥ ]

[ नान्यत्र होतुरिति कौत्सः ॥ ६ ॥ ]

उपविश्य देव बर्हिः स्वासस्थं त्वाध्यासदेयमिति ॥ ७ ॥

उपविश्यग्रहणमस्य मन्त्रस्य कर्मकरणत्वं मा भूदिति । इतरथा चोपवेशनमन्त्रः स्यात् , बर्हिरुपस्पर्शनमन्त्रो वा । तन्मा भूदिति । अथवा खण्डतन्त्रास्वपीष्टिषूपवेशने निरसनोपवेशनार्थ-

---

( १ ) एवायं $B^3$, एवयं $B_2$, एव ( with marks of deletion ) यदयं $B^1$.

मुपविश्यग्रहणम् ॥

**अभिहिष होतः प्रतरां बर्हिषद् भवेति जानुशिरसा बर्हिरुपस्पृश्यात उर्ध्वं जपेत् ॥ ८ ॥**

अत ऊर्ध्वमिति वचनं नियमार्थम् । उपस्पर्शनादूर्ध्वमेव जपेत् । नोपस्पर्शनमन्त्रः[1] । तन्मा भूदिति । अथवा खण्डतन्त्रास्त्वपीष्टिषूपवेशने निरसनोपवेशने सार्द्धमिति । तेन किं सिद्धं भवति । "पुरस्तात्पूर्णपात्रं संश्लिष्टं वेदतृणैरभिमृश्य वाचयेत्पूर्णमासि" इत्यत्राभिमृश्येति ल्यपा निर्दिष्टत्वात्पूर्णामसीत्यस्य मन्त्रस्या परिसमाप्तेः पूर्णपात्राभिमर्शनं कर्त्तव्यमिति सिद्धं भवति । तथा "पाणींश्चमसेष्ववधायाप्सु घृतस्य" इत्यत्रापि तस्या समाप्तेश्चमसेषु पाण्यवधानं कर्त्तव्यमिति । तथान्यत्रापि ल्यपा निर्दिष्टेषु ।

अथवाऽत उर्ध्वमिति वचनं बर्हिरुपस्पर्शनादूर्ध्वं जपेदेव नान्तरा विरमेदित्येतदर्थम् । इतरथा बर्हिरुपस्पृश्य पश्चादि[2]ध्मप्रदीप्तमाकाङ्क्षितम् । तन्नेष्यते[3] । इष्यते च बर्हिरुपस्पर्शनादर्वागेवाकाङ्क्षणम् । तस्माद्वचनमिति ।

**[भूपतये नमो भुवनपतये नमो भूतानां प-**

---

( १ ) B[1], नोपस्पर्शनमानि मन्त्रो वा B[2] B[3].

( २ ) पुनः ( for पश्चात् ) B[3] B[2].

( ३ ) इध्मप्रदीप्तमाकांक्षं तं नेष्यते B[1], इध्मप्रदीप्तमाकांक्षितं नेष्यते B[3], इध्ममाकांक्षितं नेष्यते B[2].

तये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यो विश्वे देवाः शास्तन मा यथेहाराधि होता निषदा यजीयांस्तदद्य वाचः प्रथमं मंसीयेति] समाप्य प्रदीप्त इध्मे स्रुचावादापयेन्निगदेन ॥ ९ ॥

समाप्य तदनन्तरमेव ब्रूयात्स्रुगादापनम् , न विलम्बयेदित्येतदर्थं समाप्यग्रहणम् । इतरथा जपं समाप्य पश्चादिध्मप्रदीप्तमाकाङ्क्षेत । तन्मा भूदिति । तस्मादिध्मे प्रदीप्यमाने[1] पूर्वस्य जपस्यारम्भः कर्त्तव्यः ।

निगदग्रहणम् "अग्निर्होता" इत्यस्य मन्त्रस्योपांशुत्वनिवृत्त्यर्थम् इतरथादापनस्य[2] कर्मकरणत्वादुपांशुत्वं स्यात् । तन्मा भूदिति ॥।

[ अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु

---

( १ ) B[1], प्रदीप्यमानायां B[3], प्रदीप्तमासन्नायां B[2].

( २ ) B[1], आदानस्य B[2] B[3],

ते यजमान देवता यो ] अग्निमित्यवसाय [ होतारमवृथा इति जपेत् ॥ १० ॥ ]

अवसानग्रहणमुपांशुतन्त्रेष्ववसानार्थम्[1] ॥

[ अथ समापयेद् घृतवतीमध्वर्यो स्रुचमास्यस्व देवयुवं विश्ववारे ईळामहै देवाँ ईळेऽन्यान्नमस्याम नमस्यान् यजाम यज्ञियानिति ॥ ११ ॥ ]

अथ समापयेदिति वचनं पूर्वनिगदस्य शेषोऽयमिति ज्ञापनार्थम् । इतरथा मन्त्रान्तरं स्यात् । तथा सति होतारमवृथा इत्यस्यान्तेऽध्वर्युः[2] स्रुचावाददीत, तत्रैव परिसमाप्तत्वान्मन्त्रस्य । तन्मा भूदिति समापयेदिति ॥

[समाप्तेऽस्मिन्निगदेऽध्वर्युराश्रावयति ॥ १२ ॥]

इहाध्वर्योः कर्मविधानस्य प्रयोजनं यदा यदाऽध्वर्युराश्रावयति तदा तदा प्रत्याश्रावणं कर्तव्यमित्येतदर्थम् ।

अध्वर्युराश्रावयति इत्येतावता सिद्धे समाप्तेऽस्मिन्निगद एव

---

(१) B[1] (-प्य-corrected tc -ष्व-); -तन्त्रप्रसव ( वस- B[2] ) नार्थं B[2] B[3].

(२) अध्वर्युः B[3], अध्वर्यु B[1] B[2].

आश्रावणं कर्त्तव्यमित्येतदर्थम् । इतरथा नानाकार्यत्वाद[1]ध्वर्यूणां घृतवतिशब्द एव[2] स्रुचोरादानविधानाच्चाणरिसमाप्तेऽप्याश्रावणं कुर्यात् । तन्मा भूदिति । तस्मादस्माभिरध्वर्युर्वक्तव्यः-निगदे समाप्त एवाश्रावणं कुर्विति ।

समाप्त इत्येतावता सिद्धेऽपि अस्मिन्निगद इति वचनमन्योऽपि निगदो विद्यत इति ज्ञापनार्थम् । तेन प्रत्याश्रावणमन्त्रस्यापि निगदार्थप्रसिद्धिरिति । इतरथा "अस्तु श्रौ३षळित्यौकारं प्लावयन्" इत्यत्र "अस्तु श्रौषट् पुरो अग्निं धिया" इत्यस्य सूक्तस्य ग्रहणं स्यात्तन्मा भूदिति ।

अथवा परे सूत्रस्यारम्भप्रयोजनमन्यथा वर्णयन्ति । कथम् । नियमार्थमेतत्सूत्रमारभ्यते । कथम् । निगदे समाप्तेऽध्वर्युराश्रावयतीत्येव न स्रुचावादत्त इति । इतरथा निगमस्य कर्मकरणत्वान्निगमान्ते स्रुगादापनं कर्त्तव्यं स्यात्तन्मा भूदिति । निगदमध्य एव स्रुचावाददीतेत्येतदर्थमिति ॥

**[प्रत्याश्रावयेदाग्नीध्र उत्करदेशे तिष्ठन् स्फ्यमिध्मसन्नहनानीत्यादाय दक्षिणामुख इति शाट्यायनकमस्तु श्रौ३षळित्यौकारं प्लावयन् ॥१३॥]**

( इति चतुर्थी कण्डिका ) ।

---

(१) B[1]-कर्तृत्वाद् B[3],-कर्तृत्वा B[2].
(२) B[2] B[3], शब्देव B[1].

## प्रयाजैश्चरन्ति ॥ १ ॥

यजमानाः कर्म कुर्वन्तीत्यर्थः । चरतिः करोतावपि वर्त्तते । यथा तपश्चरति, धर्मं चरति, तद्वदिहापीति ॥

## पञ्चैते भवन्ति ॥ २ ॥

आह इति । प्रथम इति प्रकृत्य आगूर्य पञ्चम इत्येव पञ्चत्वे सिद्धेऽपि पुनरिह संख्यावचनं कस्मात् । उच्यते । नराशंसस्तनूनपादित्युभयसम्बन्धानां कथं पञ्चैव स्युरित्येतदर्थम् । काश्यपावत्सारवासिष्ठेति येषां प्रवरास्तेषां काश्यपत्वात्तनूनपादित्ययं च प्राप्नोति । वासिष्ठत्वान्नराशंस इति च । एवं षट् स्युः । तन्मा भूदिति ।

पञ्च भवन्तीत्येतावता सिद्धेऽपि एत इति वचनम्, एते यथासमाम्नातमेव पञ्च कथं स्युरिति । इतरथोभाभ्यां समस्ताभ्यामेको वषट्कारः स्यात् पर्वयाज्या[1]वत् । एवमुभौ परिगृहीतौ भवतः, पञ्चत्वं च न विहन्यत इति । तन्मा भूत् । अन्यतरस्य परित्याग एव कर्त्तव्यः, इत्येतदर्थमेत इति वचनम् ॥

## एकैकं प्रेषितो यजति ॥ ३ ॥

यत्रानेकेन वषट्कारेणाव्यवहितेनैकसंज्ञिकं कर्म परिसमा-

( १ ) $B^2$, घर्मयाज्या-$B^3$,- - - -याज्या$B^1$.

ष्यते तत्र प्रति वषट्कारं सम्प्रैषन्नाकाङ्क्षेतेत्येतदर्थमेतदारभ्यते । तस्मादनुवषट्कारेण संप्रैषाकाङ्क्षणमिति ॥

[आगूर्याज्यादिरनुयाजवर्जम् ॥ ४ ॥]

[ये३ यजामह इत्यागूः ।

वषट्कारोऽन्त्यः सर्वत्र ॥ ५ ॥]

उच्चैस्तरां बलीयान्याज्यायाः ॥ ६ ॥

उच्चैस्तरां बलीयानित्युभयग्रहणं शब्दस्थानाभ्यामुभाभ्यामप्युत्कर्षणार्थम् ।

याज्याधिकारे पुनर्याज्याया इति वचनं यदि याज्या मन्द्रस्वरा मन्द्रेणैव वषट्कारोऽपि स्यादित्येतदर्थम् । इतरथोच्चैस्तरामिति वचनाद् वषट्कारस्य मध्यमस्वरः स्तात् । तन्मा भूत् । कथं समान एव स्वरेऽयमेवोत्कर्षः स्यादिति याज्याग्रहणम् । एकैकस्वरस्य सप्त सप्त यमा भवन्ति । यदि याज्या षष्ठेन यमेन सप्तमेन वषट्कारः प्रयोक्तव्यः ॥

तयोरादी प्लावयेत् ।

[याज्यान्तं च] ॥ ७ ॥

प्लावयेत्त्रिमात्रं कुर्यादित्यर्थः । याज्यान्तं च प्लावयेत् । आह । "ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" ( अष्टा०८।

२।६१ ) इत्यावाहनवषट्कारयोरादेः प्लुतिः सिद्धा । तथा "याज्यान्तः" ( अष्टा० ८।२।९० ) इति याज्यान्तप्लुतिरपि सिद्धा । तथैव "ओमभ्यादाने" ( अष्टा० ८।२।८७) इति प्रकृत्य "ये यज्ञकर्मणि" ( अष्टा० ८।२।८८ ) इत्यागूरादेश्च सिद्धा । एवं व्याकरणे सिद्धस्येह विधानं कस्मात् ।

उच्यते । आवहशब्दस्य पुनर्विधानप्रयोजनं प्रागुक्तम् । यत्र द्वितीयया विभक्त्या देवतामादिश्य पश्चादावहशब्दः प्रयुज्यते तत्रैवावहशब्दस्य प्लुतिः, नान्यत्रेति । एतद् व्याकरणे न सिद्धम् । तस्मादिहोच्यते । याज्यन्तप्लुतिरप्यनित्या । कौषीतकिनामपि याज्यान्तप्लुतिर्विकल्पेन विहिता । इह नित्यार्थं पुनर्विधानमिति ॥

## विविच्य संध्यक्षराणामकारम् ॥ ८ ॥

विवेकीकृत्वेति । एकारस्य अकारश्च इकारश्च भवति । तथा ऐकारस्य । एकारस्योदाहरणम् । "ज्येष्ठश्च मन्त्रो विश्वचर्षणा३इ वौषट्" । ऐकारस्योदाहरणम् । "समह्वन्पीतये समस्मा३इ वौषट्" । ओकरस्य अकार उकारश्च भवति । तथैव औकारस्य । "कविः कविमियक्षासि प्रयज्या३उ वौषट्" । औकारस्य । "सहस्रस्थूणं बिभृथः सह द्वा३उ वौषट्" ॥ "सन्ध्येष्वकारोऽर्धमिकार उत्तरं युजोरुकार इति शाकटायनः" ( ऋ० प्रा० १३।३६ ) इत्येवं विवेकः कर्तव्यः ।

सन्ध्यक्षराणीति द्वितीयया वक्तव्ये षष्ठीनिर्देशो निर्धार-

णार्थः । सन्ध्यक्षराणामकारमेव प्लावयेत् । न इकारमुकारं वेति । इतरथा "याज्यान्तः" (अष्टा० ८।२।९०) इति कृत्वा इकारस्यापि प्लुतिं कुर्यात्, उकारस्य च । तन्मा भूदिति ॥

## न चेद् द्वैवचनः ॥ ९ ॥

द्वावर्थौ वचने यस्य याज्यान्तस्य ( स ) द्विवचनः । एवं द्विवचन इति वक्तव्ये द्वैवचन इति गुरुनिर्देशः क्रियते प्रगृह्यग्रहणार्थम् । न चेद् द्वैवचन इति न चेत् प्रगृह्य इत्यर्थः । तस्मादस्मे युष्मे त्वे अमी[1] इत्येतेषामपि प्रगृह्यत्वाद्विवेको न कर्तव्यः । औकारस्य द्विवचनस्य सतोऽप्यप्रगृह्यत्वाद्विवेकः कर्त्तव्य एव । यथा "सहस्रस्थूणं बिभृथः सह द्वा३उ वौषट्" इति ।

यद्येवम्, प्रगृह्यमात्रस्य विवेको न कर्त्तव्यश्चेत् "कविः कविमियक्षसि प्रयज्यो" इत्यत्र न प्राप्नोति । कुतः । "ओकार आमन्त्रितजः प्रगृह्यः" ( ऋ० प्रा० १।६८ ) इति प्रातिशाख्ये प्रगृह्यसंज्ञकत्वात् ।

उच्यते । सर्वत्र ओकारस्यामन्त्रितजस्य प्रगृह्यसंज्ञा न भवतीति प्रातिशाख्य एव दर्शयति । यदयं "प्रकृत्येतिकरणादौ प्रगृह्याः" ( ऋ० प्रा० २।५१ ) इति प्रकृत्य पश्चादाह "स्वरेषु चार्ष्याम् । प्रथमो यथोक्तम्" ( ऋ० प्रा० २।५२-५३ ) इति

---

( 1 ) Cp. Ṛgveda-prātis'ākhya 1. 73 ( अस्मे युष्मे त्वे अमी च प्रगृह्याः ).

तस्मान्न तस्य सर्वत्र प्रगृह्यसंज्ञेति । पाणिनीयेऽप्येतत् । "ओत् । सम्बुद्धौ शाकल्यस्येतावनार्षे" (अष्टा० १।१।१५-१६) इति इतिकारे परे एवामन्त्रित(१+ज)स्य ओकारस्य प्रगृह्यसंज्ञा विहिता । तस्मादिह वषट्कारस्य परत्वान्न तत्र प्रगृह्यसंज्ञेति सिद्धम् । तस्मात् "प्रयज्या३उ" इति विवेकः कर्त्तव्य एवेति ॥

## व्यञ्जनान्तो वा ॥ १० ॥

इति व्यञ्जनान्तस्य न विवेकः । व्यञ्जनं न प्लुतिभाक् । कुतः । "अचश्च" ( अष्टा० १।२।२८ ) इति व्याकरणे वचनादसम्भवाच्च । उपधास्वरस्याप्ययाज्यान्तत्वादेव न प्राप्नोति । एवमुभयोरप्राप्तायां प्लुतौ व्यञ्जनान्तस्य विवेकप्रतिषेधं करोति । स च विवेकः प्लुतिनिमित्तकः । तस्माद् व्यञ्जनान्तस्याप्युपधास्वरस्य प्लुतिः कर्त्तव्येति सिद्धम् ॥

## विसर्जनीयोऽनत्यक्षरोपधो रिफ्यते ॥ ११ ॥

## इतरश्च रेफी ॥ १२ ॥

रेफी रप्रकृतिरित्यर्थः ॥

## लुप्यतेऽरेफी ॥ १३ ॥

अरप्रकृतिरित्यर्थः ।

आह । एवं बहुभिरक्षरैः सूत्रत्रयं न कर्त्तव्यमिति । कथं वा वक्तव्यमिति । विसर्जनीयो लुप्यते, न लुप्यते रेफीत्येवं सूत्र-

द्वयमेव कर्तव्यम् । उच्यते । एवमुच्यमाने नामिपरस्याप्यरेफिणो[1] विसर्जनीयस्य लोपः स्यात् । इष्यते च नामिपरस्यारेफिणोऽपि रेफापत्तिः । तस्मात्सूत्रत्रयमिति ।

आद्यस्य सूत्रस्योदाहरणम् । "नव्यमिस्तिरत देष्णैर्वी०" इति । द्वितीयस्य "जन्मानि सविता व्याकर्वी०" इति । तृतीयस्य "विष्णोः पदे परमे मध्व उत्सा वी०" इति ॥

## [ प्रथमः स्वं तृतीयम् ॥ १४ ॥ ]

## नित्यं मकारे ॥ १५ ॥

सामिधेनीप्रकरणे "अन्तःस्थासु तां तामनुनासिकाम्" इति मकारस्यान्तापत्तौ यदुक्तं तदिहापि भवति । आह । कस्मादिह पुनर्वचनमिति । उच्यते । एवं पूर्वप्रसिद्धमप्यर्थमिह वदन् ज्ञापयति प्रकरणान्तरे यदुक्तं तद्वचनादृतेऽन्यस्मिन्प्रकरणे न प्राप्नोति । तेन "पशवलाभे पयस्या मैत्रावरुण्यनूबन्ध्यास्थाने" इत्यत्र यद्यपि अतिदेशात्पौर्णमासतन्त्रं प्राप्तम् , तथापि "अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या पयस्यया वा[2]" इत्यत्र पयस्यायाः प्रकरणान्तरत्वात्काठकेषु न प्राप्नोति । "असमाम्नातास्वर्थात्" इति

---

(१) अत्र रेफिशब्देन वस्तुतो रप्रकृतिकस्यैव ग्रहणम् । न तु संज्ञाबलेन यस्य रिफितत्वं तस्य । अत्र ऋग्वेदप्रातिशाख्यस्य प्रथमपटले ७६, ७७ इत्यादि सूत्राणि द्रष्टव्यानि ।

(२) पयस्यया च B[1].

साान्नाय्यविकारत्वादामावास्यमेव तन्त्रं भवति । तत्रेदमपि ज्ञापकम् ।[1] "अष्टौ वैराजतन्त्राः" इति[2] काम्यप्रकरणेऽग्नेः कामस्य वैराजतन्त्रे सिद्धे पुनरुद्दिश्यते "अग्नये कामायेष्टिर्वैराजतन्त्रा" इत्यत्र पुनर्विधानम् ॥

**ये ३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू ३ वौ३षळिति वषट्कारः ॥ १६ ॥**

वषट्कारस्य रूपप्रदर्शनार्थमेतदुच्यते । वौषळित्यस्य द्व्यक्षरस्यैव वषट्कारसंज्ञा । न ये यजामहादेः सर्वस्य मन्त्रस्येति । उत्तरत्र "एतद्याज्यानिदर्शनम्" इति वचनान्नायं मन्त्रो वषट्कारसंज्ञक इत्यवगम्यते । व्यन्तू इत्यत्र प्लुतिदर्शनाच्चा[3]वश्यमत्र याज्यान्तेन भवितव्यम् । इतरथा(?) वौ इत्यत्र प्लुतिदर्शनात् वषट्कारादिना च भवितव्यमिति । तस्माद् द्व्यक्षरस्यैव वषट्कारसंज्ञेति सिद्धम् ॥

[ इति प्रथमः ॥ १७ ॥ ]

---

( १ ) अग्नेः कामस्य added in $B^2$ $B^3$.

( २ ) इति $B^1$; अत्र $B^2$; omitted in $B^3$.

( ३ ) $B^1$ corrects च्चा to द्वा on margin.

वागोजः सह ओजो मयि प्राणापानाविति वषट्कारमुक्त्वोक्त्वानुमन्त्रयते ॥ १८ ॥

उक्त्वेति वचनं यो वषट्करोति तस्यैवानुमन्त्रणमिति । इतरथान्यस्यापि[1] वषट्कारं होतानुमन्त्रयते(?–येत)। कुतः "कर्मचोदनायां होतारम्" इति । तन्मा भूदिति । उक्त्वोक्त्वेति वीप्साकरणं प्रति वषट्कारमनुमन्त्रणस्य पृथक् ज्ञापनार्थम्। इतरथाश्रावयिष्यदनुमन्त्रणवत्सकृदेव स्यात्तन्मा भूदिति ॥

दिवा कार्यो वषट्कारः ॥ १९ ॥

वचनादृते वषट्कारो न रात्रौ कीर्तयितव्य इति । स च[2] वषट्(?=अवषट्)काराणि कर्माणि वचनादृते रात्रौ न कर्त्तव्यानीत्यर्थः ॥

तथानुमन्त्रणम् ॥ २० ॥

अनुमन्त्रणस्य वषट्कारेणैक्यज्ञापनार्थमिदमुच्यते । तस्मात् "वषट्कृते होता वैश्वदेवं[3] शस्त्रं शंसेत" इत्यत्रानुमन्त्रणं कृत्वा पुनः शस्त्रारम्भः कर्तव्य इति । इतरथाऽनुमन्त्रणात्प्रागेव शस्त्रारम्भः स्यादिति ॥

---

(१) त्वस्यापि $B^1$.

(२) स च $B^1$; न $B^2$; omitted in $B^3$.

(३) वैश्वदेवं शस्त्रं omitted in $B^2$ $B^3$.

[ एतद्याज्यानिदर्शनम् ॥ २१ ॥ ]

तनूनपादग्न आज्यस्य वेत्विति द्वितोयोऽन्यत्र वसिष्ठशुनकात्रिवध्य्श्वराजन्येभ्यः ॥ २२ ॥

शुनकात्रिवसिष्ठवध्यूश्वराजन्येभ्य इत्यार्षक्रमेण वक्तव्ये वसिष्ठानां पूर्वग्रहणं पक्षे वसिष्ठा एव नाराशंसा[1] भवन्ति नान्य इति ज्ञापनार्थम् ॥

[नराशंसो अग्न आज्यस्य वेत्विति तेषाम् ॥२३॥]

[इळो अग्न आज्यस्य व्यन्त्विति तृतीयः ॥२४॥]

[बर्हिरग्न आज्यस्य वेत्विति चतुर्थः ॥ २५ ॥]

आगूर्य पञ्चमे स्वाहाऽमुं स्वाहाऽमुमिति यथावाहितमनुद्रुत्य देवता यथाचोदितमनावाहिताः स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्त्विति ॥ २६ ॥

आगूर्येत्यनुच्यमाने देवतानुद्रवणमागुरः पूर्वं स्यात् । पश्चादागूः । कस्मात् । यथावाहितमनुद्रुत्येत्युक्त्वा पुनः "स्वाहा देवा आ-

(१) नराशंसा B[1].

ज्यपाः" इति याज्याविधानात् । यथा[1] अविहृतषोडश्यन्ते "एवा ह्येवा हीन्द्र ३ । एवा हि शक्रो वशी हि शक्र इति[2] जपित्वा" इत्यत्र पुनर्याज्याविधानादागुरः पूर्वं जपो भवति । तद्वदिहाप्यागुरः पूर्वं देवतानुद्रवणं स्यात् । तन्मा भूदित्यागूर्येत्युच्यते ।

एवं देवतानुद्रवणस्यादावागुरं याज्यादौ विहित(?=ता)मप्यप्राप्त(?=प्ता)मिति[3] पुनर्विदधदाचार्यो ज्ञापयति । देवतानुद्रवणस्य न याज्यासंज्ञा याज्यान्तरङ्गतयातोयं[4] निगम इति । तस्माद्याज्यासंज्ञासंभवात्प्रयाजानां मध्येऽपि देवतानुद्रवणस्य[5] उछ्वासो वा कर्तव्य इति । "स्वाहा देवा आज्यपाः" इत्येतदाघनवानमेव भवति ।

"स्वाहामुं स्वाहामुम्" इति वीप्सायामक्रियमाणायां "प्रतिचोदनमावाहनम्" इत्यावाहनवदिहाप्यसन्धायासन्धायानुद्रवणं कुर्यात् । तन्मा भूदनियमः कथं स्यादित्येतदर्थं वीप्सा क्रियते ।

प्रमादादधिकमावाहिताया अपि निगमनार्थं यथावाहितमिति वचनम् ।

---

(१)-नाद्यथा B¹;-नाद्य B³;-नाद्यथ B².

(२) B³; षोडशिन्ये वैश्यक इति B¹; षोडशान्येवैकश इति B².

(३) आगुरयाज्यादौ विहितमप्यप्राप्तमिति B¹; आगुरं याज्यादौ विहितानामपि अप्राप्तानामिति B² B³.

(४) B¹; देवतानुद्रवणयाज्यासंज्ञायां याज्यांतरमतोयं B³; देवतानुद्रवणयाज्यां संज्ञायां ज्यां तद्रूपातोयं B².

(५) B¹; तस्माद्या संज्ञा प्रयाजानामन्येपि देवतानुद्रवणं B²; तस्माद्याज्यासंज्ञा भवत्प्रयाजानामन्येपि देवतानुद्रवणं B³.

यथावाहितमिति वचनादवभृथेष्ट्यादिषु खण्डमन्त्रा[१]स्वावाहनाभावादुत्तरेषु निगमेषु निगमनं न[२] स्यात् । इष्यते च निगमनम् । तद्व्युदासार्थं वाक्यार्थदोषपरिहारार्थं पुनर्यथाचोदितमनावाहिता इत्युच्यते ।

अत्रैके ब्रुवते । "अग्नीवरुणौ स्विष्टकृदर्थे" इति स्विष्टकृदर्थयोः प्राप्तयोरग्नीवरुणयोरुत्तमप्रयाजे निगमनार्थं यथाचोदितमनावाहिता इत्युक्तं मन्यन्ते । तत्रैतत्स्यात् । अग्नीवरुणयोः स्विष्टकृदर्थत्वाच्छ्रुतावुत्तमप्रयाजे स्विष्टकृतो निगमनप्रतिषेधाच्च, दर्शपूर्णमासयोरुत्तमप्रयाजे स्विष्टकृतो निगमनदर्शनाच्च[३] तयोरुत्तमप्रयाजे निगमनं न[४] कर्त्तव्यमिति । तन्नोपपद्यते । कुतः । यः श्रुतौ[५] प्रतिषेधः स प्राकृतस्य न वैकृतस्येति ।

इह किञ्चिद्विचारयिष्यामः । तस्माद्[६] यथावाहितमनुद्रुत्येत्यविशेषेणोच्यमाने स्विष्टकृत आवाहनवन्निगमनमित्यध्यवस्यत इति । उच्यते । सूक्तवाकप्रकरणे वक्ष्यति । "आवापिकान्तमनुद्रुत्य" इति । तत्रोक्तं विधानमिहापि भवति । तस्मादिहाप्यावापिकान्तमनुद्रुत्येत्या-

---

( १ ) B[1]; अवभृथेष्ट्यादीनां खण्डतन्त्रा-B[3]; अवभृथेष्ट्यादीनांमखण्डमत्रा-B[2].

( २ ) B[3]; न omitted in B[1] B[2].

( ३ ) B[3]; निगमनदर्शना च B[2], निगमनादर्शना B[1].

( ४ ) B[1]; न omitted in B[2] B[3].

( ५ ) यच्छ्रुतौ B[1].

( ६ ) तस्मात् omitted in B[1].

कृष्टत्वात् स्विष्टकृतो न निगमनमिति । एते चत्वारो निगमाः परस्परं सम्बद्धाः । अन्यत्रोक्तमन्यत्रापि भवतीत्यवगन्तव्यमेव । इतरथेहा-ज्यपादीनामपि निगमनं स्यात् । तच्च सर्वैरपि न[1] क्रियते । नास्ति तत्र काचिदपि विप्रतिपत्तिरतः सिद्धमविप्रतिपत्तिकमिति न्यायः[2] ॥

[ आऽतो मन्द्रेण ॥ २७ ॥ ]

[ ऊर्ध्वं च शंयुवाकात् ॥ २८ ॥ ]

मध्यमेन हवींष्या स्विष्टकृतः ॥ २९ ॥

अत्र चकारलोपो द्रष्टव्यः । आ स्विष्टकृतश्चेति मध्यमेन भवति ।

मध्यमेना स्विष्टकृत इत्येक(?=व)सूत्रेणैव सिद्धेऽपि हविर्ग्रहणं वाजिनपौर्णादर्वादीनामपि मध्यमस्वरार्थम् । एतस्मिन्नेवावसाने वैश्वानरीयस्य यजतीत्येतदर्थं च ।

आ स्विष्टकृत इति वचनमाज्यभागमनोतादीनां मध्यमस्व-रार्थम् ।

अत्राह । किं हविर्ग्रहणेनैवाज्यभागयोर्ग्रहणं भवतीति । नेत्यु-

---

( १ ) B¹; न omitted in B² B³.

( २ ) काचिदपि विप्रतिपत्तिन्ज ( or न्कु ) तः सिद्धमविप्रति-कमिति न्यायः B¹; नास्ति तत्र काश्चिदविप्रतिपत्तिपत्रासिद्धमविप्रि-तिपत्तिकमिति न्यासः B²; नास्ति तत्र कश्चिदविप्रतिपत्तिकमिति न्यासः B³.

च्यते । प्रधानहविषामेव हविःसंज्ञा नाङ्गहविषामिति । आह । यद्येवं वाजिनस्याङ्गहविष्ट्वात् मध्यमस्वरो न प्राप्नोतीति । तत्रैतत्स्याद्वाजिनं प्रधानहविरिति । एवं च ब्रुवतो दोषः। कथम् । "अग्न्याधेयप्रभृत्या त उपांशुहविषः" इत्यत्र दाक्षायणयज्ञे वाजिनस्याप्युपांशुत्वं प्राप्नोति । अत्रैके ब्रुवते । को दोषः । उपांशुत्वं भवत्विति । ये पुनस्तत्र वाजिने उपांशुत्वं अङ्गहविष्ट्वान्नेच्छन्ति तेषां वाजिनस्य मध्यमस्वरोपि न प्राप्नोति अङ्गहविष्ट्वादेव । नैष दोषः । मध्यमेन हवींष्या स्विष्टकृत इति[1] स्विष्टकृतमुपादायाङ्गहविर्भिः सार्द्धं सर्वाणि हवींषि मध्यमस्वरेणेत्यर्थः । मनोतायास्तु हविःसम्बन्धाद्धविःस्वर एव मध्यमस्वरो भवति ॥

## [ उत्तमेन शेषः ॥ ३० ॥ ]

[अग्निर्वृत्राणि जङ्घनदिति पूर्वस्याज्यभागस्यानुवाक्या । त्वं सोमासि सत्पतिरित्युत्तरस्य । जुषाणो अग्निराज्यस्य वेत्विति पूर्वस्य याज्या । जुषाणः सोम आज्यस्य हविषो वेत्वित्युत्तरस्य । ]

---

( १ ) B³; स्विष्टकृत इति omitted in B²; B¹ adds: एक सूत्रं करिष्यामः । अत्र कोर्थः । आ स्विष्टकृत इति हविर्विशेषणार्थं क्रियते । कथं । आ स्विष्टकृत.

## तावागूर्यादेशं यजति ॥ ३१ ॥

आगूर्येत्यनुच्यमाने आदेश आगुरः पूर्वं स्यात्तन्मा भूदिति । द्वितीयया विभक्त्यादेशः कर्त्तव्यः । तस्य ज्ञापकम् "प्रतिलोममादिश्य यजेद्ये ३ यजामहे त्वष्टारं सरस्वतीम्" इत्यत्र द्वितीयया दर्शनम् ॥

## सर्वाश्चानुवाक्यावत्योऽप्रैषा अन्या अन्वा-याज्याभ्यः ॥ ३२ ॥

प्रयाजानुयाजानामादेशप्रतिषेधार्थमनुवाक्यावत्य इत्युच्यते । इतरथा मन्त्रलिङ्गादिभिर्देवता आगमाया(?)देशं कुर्यात्तन्मा भूदिति । अप्रैषा इति पशावनुवाक्यावत्त्वेऽपि सप्रैषत्वादादेशो मा भूदिति । सर्वा इति पशावाज्यभागयोरसप्रैषत्वे आदेशप्रतिषेधार्थम् । इतरथा' ज्यभागयोः प्रतिपदविधानात्सप्रैषत्वे भवत्यादेशः । तन्मा भूदिति सर्वा इत्युच्यते। एतदेव ज्ञापकं पशावाज्यभागयोः करणपक्षे सप्रैषं प्रचरणं भवतीति ॥

## सौमिकीभ्यश्च या अन्तरेण वैश्वानरीयं प-त्नीसंयाजाँश्च ॥ ३३ ॥

सोमे याः प्रयुज्यन्ते ताः सौमिक्यः । न सोमोत्पन्ना इति । तस्य ज्ञापकम् "वाजिभ्यो वाजिनमनावाह्यादेशम्" इत्यत्रादेशग्रहणम् । तस्यादेशस्य सिद्धस्यापि पुनर्विधानं करोति । तस्य प्रयोजनम् "वैश्वा-नरीयं पत्नीसंयाजाँश्च" इत्यस्मिन्विधौ प्रातःसवने आदेशस्य प्रतिषे-

धविषयेऽपि प्रयुज्यमानस्य वाजिनस्यादेशार्थम् । यदि सोमोत्पन्ना इत्येवार्थो गृह्येत वाजिनस्य सोमात्पन्नत्वाभावादे[1]वादेशो भवति प्रातःसवनेऽपि । तथा सति वाजिनस्यादेशग्रहणमपार्थकं स्यात् । तन्मा भूदिति । अन्यत्रोत्पन्ना अपि पुनः सोमे याः प्रयुज्यन्ते ताभ्य इति सिद्धम् ।

वैश्वानरीयमिति तद्धितनिर्देशादेतस्मिन्नेवावसाने[2] "वैश्वानरीयस्य" इति तद्धितनिर्दिष्टं गृह्यते । अनग्निकेपि तद्वदुपचारेण । "साग्निचित्ये त्रीण्यन्यानि वैश्वानरः" इत्येतत्तद्धितनिर्दिष्टत्वाभावात् न गृह्यते ।

अथ मतम् । "वैश्वानरीयं नवमम्" इति तद्धितनिर्दिष्टं ग्राह्यमिति । तन्नोपपद्यते । अविशेषवचने प्रथमतः संप्रत्यय इति प्रथममेव ग्राह्यम् ।

"पत्नीसंयाजैश्चरित्वावभृथं व्रजन्ति" इति पत्नीसंयाजचोदिताः सवनीयपत्नीसंयाजा एव गृह्यन्ते ; नाचोदितत्वादर्थप्राप्ता अग्नीषोमीयपत्नीसंयाजा अनूबन्ध्यायाश्चेति[3] । अस्योदाहरणम् । "संस्थिते मरुत्वतीये बार्हस्पत्येष्टिः" इति । वाजिनस्य पुनरादेशग्रहणमेव ज्ञापकं नाग्नीषोमीयपत्नीसंयाजा इति । कुतः । वैश्वानरीयाग्नीषोमीयपत्नीसंयाजानां मध्ये वाजिनाभावात् । तथा सति प्रतिषेधविषयेऽपि वाजिनस्यादेशार्थं पुनरादेशग्रहणमपार्थकं स्यात् । तस्मादिह सवनीयपत्नीसंयाजा एव ग्राह्याः ॥

(१) B¹; सोमोत्पन्नत्वादे- B²B³.

(२) B²; एवासाने corrected to एवावसाने B³; एवासने B¹.

(३) B¹; अनूबंध्याश्चेति B² B³.

[ एतौ वार्त्रघ्नौ पौर्णमास्याम् ॥ ३४ ॥ ]

अनुवाक्यालिङ्गविशेषान्नामधेयान्यत्वम् ॥ ३५ ॥

एतस्मिन्ननुच्यमाने वार्त्रघ्नौ वृधन्वन्तौ पुष्टिमन्तावित्येवं चोदनायां तैस्तैरेव गुणैः सह निगमनं स्याद्यथाऽन्यानां[1] (?) देवतानां गुणैः सह प्रयोगो भवति । तन्मा भूत् । अनुवाक्यासु लिङ्गविशेषादेव नामधेयान्यत्वमाज्यभागयोर्न प्रयोगविशेषो नान्यो विकारः कर्त्तव्य इत्येदर्थमेतदारभ्यते ॥

ततो विचारः ॥ ३६ ॥

ततो लिङ्गविशेषादेवाज्यभागयोर्विचारः प्रत्येतव्य इति । किमुक्तं भवति । यत्र तु पुंलिङ्गेन द्विवचनेन च लिङ्गमात्रस्यैव ग्रहणं क्रियते तत्राज्यभागयोरिदं ग्रहणमिति प्रत्येतव्यम् । यथा "पुष्टिमन्तौ", "जीवातुमन्तौ" इति । इतरथा न ज्ञायेत कस्येदं ग्रहणमिति । तन्निवृत्त्यर्थं विचारग्रहणम् ॥

नित्ये याज्ये ॥ ३७ ॥

पूर्वमाज्यभागयोस्सह याज्यानुवाक्यां विधाय तदनन्तरम् "एतौ वार्त्रघ्नौ पौर्णमास्याम्"इत्युक्तत्वात् अनुवाक्यावत् याज्ये अपि पौर्णमास्यामेव स्याताम् । कथमेतावेव याज्यानुवाक्यावाज्यभागौ

(१) ऽन्यानां B[1]; ऽन्याहं B[2] B[3].

पौर्णमास्यां भवत इति । तन्मा भूत् । अमावास्यायामप्येते एव याज्ये कथं स्यातामित्येतदर्थमेतदारभ्यते ॥

वृधन्वन्तावमावास्यायाम् । अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयमिति । आता वाग्यमनम् ॥ ३८ ॥

[अन्तरा च याज्यानुवाक्ये ॥ ३९ ॥]

निगदानुवचनाभिष्टवनशस्त्रजपानां चारभ्याऽऽसमाप्तेः ॥ ४० ॥

अत्र याज्यासंस्तवनमपि[1] वक्तव्यम् । याज्यासंस्तवनशस्त्रजपानां चेति यो य आरभ्यते तस्य तस्य वाग्यमनं कथं स्यादिति । प्रशास्त्रादीनामप्यर्थायारभ्येत्युच्यते । घर्मे पूर्वस्मिन्पटले समाप्तेऽप्यभिष्टवनस्यासमाप्तत्वाद् द्वितीयस्यापि पटलस्यासमाप्तेर्वाग्यमनार्थमासमाप्तेरित्युच्यते ॥

अन्यद्यज्ञस्य साधनात् ॥ ४१ ॥

इदं वाग्यमनविधानं यज्ञस्य साधनाद्धेतोरन्यद्भवति । अ-

---

(१)-सस्तवं कतिचित (-चि B²) B² B³;-संस्तवनविधि च corrected to-संस्तवनमपि on margin in B¹.

वाग्यमनं भवतीत्यर्थः । तेन किं सिद्धं भवति । यज्ञभ्रेषे वाग्यमन-मनादृत्य एवं मा कार्षीरेवं कुर्विति वक्तव्यमेवेत्येतदर्थमेतदारभ्यते ॥

[आपद्यातो देवा अवन्तु न इति जपेत् ॥ ४२ ॥]

अपि वान्यां वैष्णवीम् ॥ ४३ ॥

अपि वा वैष्णवीमिति सिद्धेऽप्यन्यामिति ब्रुवन् ज्ञापयति "अतो देवा अवन्तु नः" इत्यस्यापि वैष्णवीत्वम् । तस्मात् "सो-(? स्तो )ममतिशस्यैन्द्र्या यजेद्वैष्णव्या वा" इत्यत्रानयापि यष्टव्य-मिति । पैम्या-यकां च तस्मिन्-करणेनैव ( *sic* ) यागा विहितः[१]॥

( इति पञ्चमी कण्डिका । )



( १ ) B[1]; इत्यस्यान्वेकरणेनयव यागो विहितः ( for इत्य-स्यापि to विहितः ) B[2] B[3].

## उक्ता देवतास्तासां याज्यानुवाक्याः ॥ १ ॥

उक्ता इत्यनुच्यमानेऽप्यावाहने कृतसंज्ञानां प्रागुक्तानामेव देवतानां प्रत्ययो भवति, यथोत्तमप्रयाजे । तद्वदिहापि सिद्धे उक्ता इति वचनं याज्यानुवाक्या[1]समीपे देवताविधानं कर्तव्यमिति प्रद्-र्शनार्थम् । तस्माद्यत्र देवता उक्तास्तत्र तदनंतरं याः काश्चिदृचो विधीयन्ते तास्तासां याज्यानुवाक्या इति प्रत्येतव्याः । तासामृचां समीप उच्यमाना आदेशास्तासामृचां देवता इति प्रत्येतव्या इति ॥

अग्निर्मूर्धा भुवो यज्ञस्यायमग्निः सहस्रिण इति वेदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एता-मग्नीषोमा सवेदसा युवमेतानि दिवि रोचनानी-न्द्राग्नी अवसा गतं गीर्भिर्विप्रः प्रमतिमिच्छमान एन्द्रसानसिं रयिं प्रससाहिषे पुरुहूत शत्रून्महाँ इन्द्रो य ओजसा भुवस्त्वमिन्द्र ब्रह्मणा महानिति ॥२॥

"अयमग्निः सहस्रिणः" इति वा । अस्या याज्याया अनन्त-रयाज्ययैव सह विकल्प इति । येषां पुनरध्वर्यूणाम् "आधाने सर्वं गायत्रं प्रथमं हविः" इति वचनं तैः सह प्रयोगेऽग्नेरियमेव याज्या ग्राह्या ॥

---

(१) B[2];-वाक्य-B[1]B[3].

यद्यग्नीषोमीय उपांशुयाजोऽग्नीषोमा यो अद्य वामान्यं दिवो मातरिश्वा जभारेति ॥ ३ ॥

वैष्णवस्योपांशुयाजस्य यागक्रमेण याज्यानुवाक्ये विधायाग्नीषोमीयस्योपांशुयाजस्य यागक्रमेणानुक्त्वा पुनरन्ते विधानं कस्मात्, यद्यग्नीषोमीय उपांशुयाज इति । उच्यते । "अग्नीषोमाविन्द्राग्नी विष्णुः" इत्यत्र "अग्नीषोमा सवेदसा", "युवमेतानि" इत्येतयोर्ग्रहणार्थम् । इतरथाग्नीषोमीयस्योपांशुयाजस्य यागक्रमेण याज्यानुवाक्ययोः पूर्वं विधानं भवति । तथा सति "अदृष्टादेशे नित्ये" इति "अग्नीषोमा यो अद्य वाम्", "आन्यं दिवः" इत्येते प्राप्नुयाताम् । कुतः । पूर्वं विधानात् । तन्निवृत्त्यर्थं मन्त्रविधानमेवं ब्रुवन् ज्ञापयति । याज्यानुवाक्याद्वित्वे तु "अदृष्टादेशे नित्ये" इत्यत्र पूर्वविहिते एव[1] ग्राह्ये इति ॥

[ अथ स्विष्टकृतः पिप्रीहि देवाँ उशतो यविष्ठेत्यनुवाक्या ॥ ४ ॥ ]

ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरित्युक्त्वा षष्ठ्या विभक्त्या देवतामादिश्य प्रिया धामान्ययाळित्युपसंतनुयात् ॥ ५ ॥

---

(१) -विहित एव B¹;-विहिते वा B² B³.

आगुरादेशयोः पुनरपि पाठः क्रियते निगमनादौ प्रापणार्थम् । इतरथा निगमनादूर्ध्वम् "अग्ने यदद्य" इत्यस्या ऋच आदौ स्याताम् । कुतः । तस्या याज्यात्वात् । एवंविधं ज्ञापयति । निगदस्य न[1] याज्यासंज्ञेति । तेन याज्याया अनवानत्वेऽपि निगदे कामचार इति । अथवा "अग्निं स्विष्टकृतम्" इत्यादेशस्य पाठोऽवश्यं कर्तव्य एवेति। इतरथावाहने "अग्निं होत्रायावह" इति स्विष्टकृच्छब्दं विनावाहितत्वादिहापि तथैवादेशः स्यात् । तन्निवृत्त्यर्थं वचनम् ।

"षष्ठी शेषे" ( अष्टा० २।३।५१ ) इति लक्षणातः सिद्धायामपि षष्ठ्या विभक्त्येति वचनं प्रणवनिवृत्त्यर्थम् । इतरथा उपसंतनुयादिति संतानविधानात्प्रणवः प्राप्नोति । कुतः । संतानाङ्गत्वं प्रणवस्य । तन्निवृत्त्यर्थमिति ॥

## एवमुत्तरा अयाळयाळिति त्वेव तासां पुरस्तात् ॥ ६ ॥

एवमुत्तरा इति वचनादुत्तरासामप्यग्निशब्दः स्यात्—अयाळग्निरग्नीषोमस्येति । तन्निवृत्त्यर्थमेवकरणम् ।

एवमपि द्विरयाट्शब्दः प्राप्नोति उत्तरासाम् । कथम् । "अयाळग्निः" इत्यग्निसहचरित एकोऽयाट्शब्दः । पुनः "प्रिया धामान्ययाट्" इति प्रियाधामानिसहचरितो द्वितीय इति । एवमेकैकस्या देवताया द्वौ द्वौ अयाट्शब्दौ प्राप्नुत इति । उच्यते । नैष दोषः ।

---

( १ ) न omitted in B[2] B[3].

एकस्या देवताया एक एवायाट्शब्दः, न द्वितीयः । कुतः । उत्तरत्र पशोः स्विष्टकृत्प्रैषे एकस्यैवायाट्शब्दस्य दर्शनात् । तद्वदिहाप्येक एवेति सिद्धम् ।

आह । प्रिया धामानीत्युपसंतनुयादिति सिद्धेऽप्ययाड्ग्रहणं कस्मात् । संबन्धार्थम् । यत्र प्रियाधामानिशब्दः प्रयुज्यते तत्रायाट्शब्देनाप्यवश्यं भवितव्यमिति । "देवानामाज्यपानां प्रिया धामानि" इत्यत्र । इतरथा "आज्यपान्तमनुक्रम्य" इति वचनादाज्यपेष्वयाट्शब्दो न स्यात् । इष्यते च तत्रायाट्शब्दः ।[1] "देवानामाज्यपानां प्रिया धामानि" इति तस्माद्वचनम् । इदं चान्यत्[2] प्रयोजनम् । आवाहनवदिहापि प्रति चोदनं विरम्य विरम्य निगमयेत् । तन्मा भूत् । पूर्वस्या देवतायाः प्रियाधामानीतिशब्दस्य उत्तरस्या देवताया अयाट्शब्देन सह संधानं कर्तव्यमित्येतदर्थं प्रिया धामान्ययाळित्युच्यते ।

पुरस्तादित्यनुच्यमाने उत्तरासां देवतानामुपरिष्टात्प्रयुज्यमानस्य प्रियाधामानिशब्दस्यापि निवृत्तिः स्यात् । तन्मा भूत् । पूर्वप्रयुक्तस्याग्निशब्दस्यैव निवृत्तिः कथं[3] स्यादित्येतदर्थं पुरस्ताद्ग्रहणम् ॥

---

(१) आवह in B³ and आवाह in B² added; आह added in B¹, with marks of deletion.

(२) B¹; नान्यत् ( for इदं चान्यत् ) B² B³.

(३) B¹ adds न.

आज्यपान्तमनुक्रम्य देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविरग्ने यदद्य विशो अध्वरस्य होतरित्यनवानं यजति ॥ ७ ॥

आज्यपान्तमाज्यपसमीपमित्यर्थः ॥

प्रकृत्या वा ॥ ८ ॥

प्रकृत्येति न वक्तव्यं । अनवानं वा यजतीत्येवमुच्यमानेऽप्यर्थादेव पक्षेण प्रकृतिभावो भवतीति । एवं सिद्धेऽपि प्रकृत्येतिवचनं प्रकृतिपक्षोऽपि बलवत्तर इति प्रदर्शनार्थम् ॥

( इति षष्ठी कण्डिका )



प्रदेशिन्याः पर्वणी उत्तमे अङ्क्त्वौष्ठयोर-भ्यात्मं निमार्ष्टि वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामीत्युत्तरमुत्तरे मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नामीत्यधरमधरे ॥ १ ॥

उत्तरमुत्तर इत्युक्त्वाधरमधर इत्यर्थात् सिद्धेऽपि पुनरधरमधर इति वचनमुत्तरतरे अधरतरे[1] इति तरशब्दार्थः । यत्र सलोमकौ तत्र निमृजतीत्यर्थः[2] । अलोमकेऽप्योष्ठशब्दो विद्यते हि । तस्य ज्ञापकम् "ओष्ठौ संस्पृश्य यत्रालोमकौ" इति ॥

[स्पृष्ट्वोदकमञ्जलिनेळां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादस्या उदगङ्गुलिं पाणिमुपधायावान्तरेळामवदापयीत ॥ २ ॥]

अन्तरेणाङ्गुष्ठमङ्गुलीश्च स्वयं द्वितीयमाददीत ॥ ३ ॥

स्वयं गृह्णाति द्वितीयम् । तस्याप्यवान्तरेडासंज्ञार्थं द्वितीयग्रहणम् । तस्मात्तस्याप्यन्तरेणाङ्गुष्ठमङ्गुलीश्चेत्येवं स्वयमेव द्वितीयमाददीत,

---

( १ ) B[1]; उत्तरोत्तरे अधरतर B[3]; उत्तरे अधरतर B[2].
( २ ) B[2], निमृजीतेत्यर्थः B[1] B[3].

नाध्वर्युहस्तादिति । इतरथाध्वर्युणेडायामवत्तं पुनरप्यध्वर्युहस्तादाद-
दीत । तन्मा भूदिति ॥

प्रत्यालब्धामङ्गुष्ठेनाभिसंगृह्य प्रत्याहृत्या-ङ्गुलीरमुष्टिं कृत्वा दक्षिणत इळां परिगृह्यास्यसम्मितामुपह्वयते प्राणसम्मितां वा ॥४॥

उपह्वयत इत्युपह्वानसंज्ञितत्वादिडायां निगमत्वमिति ॥

इळोपहूता सह दिवा बृहतादित्येनोपास्माँ इळा ह्वयतां सह दिवा बृहतादित्येनेळोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इळा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेळोपहूता सह पृथिव्या रथन्तरेणाग्निनोपास्माँ इळा ह्वयतां सह पृथिव्या रथन्तरेणाग्निनोपहूता गावः सहाशिर उप मां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखा भक्ष उप मां सखा भक्षो ह्वयतामु-

पह्वतेळा वृष्टिरुप मामिळा वृष्टिर्ह्वयतामित्युपांश्वथोच्चैः ।

इळोपहूतोपहूतेळोपास्मां इळा ह्वयतामिळोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इति ॥५॥

अथोच्चैः । एतस्मिन् अनुच्यमाने "उप मामिळा वृष्टिर्ह्वयतामिति' इत्यत्रेतिशब्दकरणादुपह्वानस्यात्रैव परिसमाप्तिरित्येवमर्थो गृह्येत । तथा सत्युत्तरस्य "इळोपहूता" इत्येवमादेरुपह्वानसंज्ञा न स्यात् । तथा सति तस्यानिगमत्वं स्यात् । तन्मा भूत् कथमुपांशूच्चयोरुपह्वानसंज्ञा स्यादित्येतदर्थमथोच्चैरित्युच्यते ।

अथवो[1]च्चैरिति वचनं पूर्वस्य निगमस्य[2] उपांशुत्वा[3] कथं

---

(१) अथो- B² B³.
(२) B² B³; निगदस्य B¹.

वा न[1] स्यात् । "ऊर्ध्वं च शंयुवाकात्" इति पत्नीसंयाजे इडायां मन्द्रस्वरः प्राप्नुयात्तन्मा भूदिति ॥

उपहूयावान्तरेळां प्राश्नीयादिळे भागं जुषस्व नः पिन्व गा जिन्वार्वतो रायस्पोषस्येशिषे तस्य नो रास्व तस्य नो दास्तस्यास्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः सर्वपुरुषा इति वा ॥८॥

इत्युपहूय तदनन्तरमेवावान्तरेडां प्राश्नीयात्पश्चादिडामित्येतदर्थमुपहूयेति वचनम् ।

सर्वपूरुषा इत्यत्र मन्त्रान्तेतिकरणाभावात्सर्वपुरुषा इत्यनेन तुल्यजातीयेन मन्त्रावयवेन सर्वपूरुषा इत्यस्य विकल्पो भवति । यदि सर्वेण मन्त्रेण विकल्प इष्टः स्यात्सर्वपुरुषा इतीतिकारं कृत्वा पुनः स पूरुषा इति वेत्येवमवक्ष्यत् । यथा "तेष्वग्निहोत्रमविश्रये-दविश्रितमध्यविश्रितमविश्रितं हिं २ इति" पूर्वमन्त्रान्ते इतिकारं कृत्वा पुनः "इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्त्विवति वा" इति ॥

( इति सप्तमी कण्डिका )

---

( १ ) न struck out in B[1].

मार्जयित्वानुयाजैश्चरन्ति ॥१॥

उत्तरत्र "अप आसेचयते तन्मार्जनम्" इति "देवादयोऽनुयाजाः" "वीतवत्पदान्ताः" इति मार्जनानुयाजानां विधानादेव सिद्धेऽपीह मार्जयित्वानुयाजैश्चरन्तीति वचनं मार्जनस्यानुयाजानां च सम्बन्धकरणार्थम् । यत्रैवानुयाजास्तस्यामेवेडायां मार्जनं कर्तव्यम् । न पत्नीसंयाजेडायामिति । प्रथमायामिडायामित्यर्थः ॥

[ परिस्तरणैरञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनम् ॥२॥ ]

देवादयोऽनुयाजाः । वीतवत्पदान्ताः त्रयः॥३॥

देवादय इत्येतावता सिद्धेऽपि वीतवत्पदान्ता इति प्रयाजानामपि "प्रागुत्तमाश्चतुरः" इत्यत्र वीतवत्पदान्तत्वसम्प्रत्ययार्थम् । इतरथा तत्र मन्त्राणां विच्छेदो न ज्ञायेत । कुतः । इतिकरणाभावात् । अवश्यमेतदेवाभ्युपगन्तव्यम् । वीतवत्पदान्ता इति वचनं प्रयाजार्थमपि क्रियते इति[1]। इतरथा यद्यनुयाजार्थमेव स्यात् देवादयो वीतवत्पदान्ता अनुयाजा इत्येवं सूत्रन्यासमकरिष्यत् । यस्मादेवं न करोति तस्मादेव वीतवत्पदान्तत्वमुभयेषामपि सिद्धम् ॥

[ एकैकं प्रेषितो जपति ॥ ४ ॥ ]

[ देवं बर्हिर्वसुवने वसुधेयस्य वेतु । ] देवो नराशंसो वसुवने वसुधेयस्य वेतु । देवो अग्निः

(१) क्रीयेतेति $B^1$.

स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाड्यौं अपिप्रेयैं ते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहीत्यनवानं वा ॥५॥

अनवानं वेत्यत्रार्थात्[1] प्रकृत्या वेति वाक्यशेषो भवति । "देवो अग्निः स्विष्टकृत्" इत्यस्या ऋक्त्वात्प्रकृतिपक्षे "अमत्सत" इत्यर्द्धर्चेऽवसानं कर्त्तव्यम् । 'देवो अग्निः स्विष्टकृत्" ( ऋक्प्रा० १६।६२ ) इति पार्षदे ऋक्त्वप्रसिद्धिः ।

आह । स्विष्टकृति "अनवानं यजति । प्रकृत्या वा" इति प्रकृतिग्रहणं क्रियते । तद्वदिहापि अनवानं प्रकृत्या वेति वक्तव्यम् । न चैवमुच्यते । तस्माद् वयं मन्यामहे अनेन विषमनिर्देशेनावश्यं प्रयोजनम् स्विष्टकृत्यपूर्वमप्राप्तमनवानं विधीयते । पक्षे तस्मात्तत्र प्रकृतिग्रहणं क्रियते । इह तु पूर्वमेव सिद्धस्यानवानस्य पक्षे विहृति[2]र्विधीयते । तस्मात्प्रकृत्येति नोच्यते । एवं विषमनिर्देशेनैवानुयाजार्थमानवान्यं साधयति । अनुयाजेषु निदर्शितं तुल्यत्वात् प्रयाजेष्वपि भवति । तत्प्रयाजानामप्यानवान्यं सिद्धम् ॥

( इत्यष्टमी कण्डिका )

---

( १ ) -र्थात् B³ ; -र्थत्वात् B¹ B².

( २ ) विवृतिर् B² ; विवृत्तिर् B¹ ; विकृति B³.

सूक्तवाकाय संप्रेषित इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि। उप श्रुती दिवस्पृथिव्योरोमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम्। शंगयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ। वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदीत्यवसाय प्रथमया विभक्त्यादिश्य देवतामिदं हविरजुषतावीवृधत महो ज्यायोऽकृतेत्युपसंतनुयात् ॥ १ ॥

"प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" (अष्टा० २।३।४६) इति प्रथमया निर्देशे सिद्धेऽपि प्रथमया विभक्त्येति वचनं षष्ठ्या विभक्त्येत्यनेन समानम् ॥

[ एवमुत्तराः ॥ २ ॥]

अक्रातामक्रतेति यथार्थम् ॥ ३ ॥

वचनादृते प्रकृतावूहो न प्राप्नोति इति ज्ञापनार्थं लक्षणतः सिद्धस्याप्यूहस्य यथार्थमिति वचनम्। शास्त्रान्तरेण व्यक्तं न प्रकृतावूह इति। कौषीतकिनामपि वचनम्—"आर्षमाम्नानं मन्त्राणां प्रकृतौ। यथार्थ-

मुत्तरस्यां ततौ" ( शा० श्रौ० ६।१।२-३ ) इति[1]। तस्मात्पत्नीसंयाजेडायां यद्यपि पत्न्यभिधेया[2] तथापि न तत्रोहः कर्तव्यः। इतरथा उपहूतेयं यजमानेति स्त्रीलिङ्गेन चोहः कर्तव्यः स्यात्। तन्मा भूदिति यथार्थवचनम्।

अमन्त्र[3]त्वादूहस्याकृषातामकृषतेति[4] एवमुभयोः प्राप्त्योर्युदासार्थमक्रातामक्रतेत्येतयोः छान्दसयोरशास्त्रयोः प्रापणार्थं चाक्रातामक्रतेत्युच्यते ।

तत्रैतत्स्यात्। एवं चेदक्रातामक्रतेति न वक्तव्यमेव । कथम्। अनुच्यमानेऽप्येते एव द्विवचनबहुवचने भवतः। कुतः। "देवा आज्यपाः" इत्यत्राक्रतेति बहुवचनदर्शनादिति । तन्नोपपद्यते । यल्लक्षणविरुद्धं दृष्टं तत्तत्रैव भवति, नान्यत्र । तस्माद्वक्तव्यमेव ॥

## उक्तमुपांशोः ॥ ४ ॥

यः प्राणसन्तानः शास्त्रे उक्तः "उपांशूच्चयोः सन्ताने प्राणसन्ततं भवतीति ज्ञायते" इति स उपांशुः कर्तव्य इत्येतदर्थम्। तस्मादुपांशुदेवतानामुपांशुत्वादनुच्छ्रस्यैवोच्चैरिदं हविरजुषतेति प्रतिपत्तव्यम्।

---

( १ ) उत्तरस्यां ततावीति B[1]; उत्तरस्यां तथा इति B[3]; उत्तरस्या तथा इति B[2].

( २ ) B[1]; तद्विधेया B[2] B[3].

( ३ ) अमन्त्र–B[1]; मन्त्र–B[2] B[3].

( ४ ) अकृषातामकृषन्तेति B[1]; अकृशतामकृषतेति B[2]; अकृषतामकृषतेति B[3].

अत्राह । एवं चेन्न वक्तव्यम् । कथम् । प्राणसन्ततं भवतीति ज्ञायत इति तत्र परिभाषितत्वादेवेहापि प्राणसन्तानस्य प्राप्तिर्भवति । इहोच्यते । नैष दोषः । एतस्मिन्ननुच्यमाने तु तत्र "प्रणवेनावसायानुद्रवस्योत्तराम्" इति प्रणवस्य प्रतिपदविधानादिह प्रणवाभावात्प्राणसन्तानो न स्यात्तन्मा भूदिति । इह यद्यपि प्रणवाभावस्तथापि प्राणसन्तानः कर्तव्य इत्येतदर्थमेतदारभ्यते ।

एतद्विधानं निगमसामान्यात्स्विष्टकृत्यपि "प्रिया धामान्ययाट्" इत्यत्रोपसन्ताने च भवति । "आवापिकान्तमनुद्रुत्य" इति इहोत्तमप्रयाजेऽपि भवति निगमसाम्यादेव । "यथावाहितमनुद्रुत्य" इति तत्रोक्तं स्विष्टकृत्सूक्तवाकयोरपि भवति । "प्रतिचोदनमावाहनम्" इत्यत्रावाहने उक्तं सूक्तवाकेऽपि भवति ॥

आवापिकान्तमनुद्रुत्य देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रताग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानोऽसावसावित्यस्यादिश्य नामनी उपांशु सन्निधौ गुरोः । आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामा-

शास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषाः। इष्टं च वित्तं चोभे च नो द्यावापृथिवी अंहसः पातामेह गतिर्वामस्येदं नमो देवेभ्य इति ॥ ५ ॥

अस्येति वीप्सार्थम्। अस्यास्य यजमानस्येति। तस्मात्सत्रेषु सर्वेषां नामादेशः प्रवरानुपूर्व्येण कर्त्तव्यः। प्राधान्याद् व्यावहारिकं नाम पूर्वं वक्तव्यं, पश्चान्नक्षत्रनामेति। कथं व्यावहारिकस्य नाम्नः प्राधान्यमिति चेदुच्यते। "स्वं नामादिशेत" इत्यत्राविशेषवचनेऽपि व्यावहारिकनामधेयस्यादेशः क्रियते। अविशेषवचनेन प्रधानतः सम्प्रत्यय इति। तस्माद्व्यावहारिकस्य प्राधान्यमिति सिद्धम्। "आर्षेयाणि गृहपतेः प्रवरित्वा" इत्यत्र नामधेयादि[1] व्याख्यास्यामः ॥

( इति नवमी कण्डिका )

---

(१)-त्रि B¹.

शंयुवाकाय सम्प्रेषितस्तच्छंयोरावृणीमह इत्याहानुवाक्यावदप्रणवाम् ॥ १ ॥

शंयुवाक इति संज्ञा । आहेति वचनाच्चास्य निगदत्वं भवति । निगदत्वेनैवानुवाक्यावद्वचने सिद्धेऽपि पुनरनुवाक्यावदिति वचनमृचां निगदत्वं भवतीति ज्ञापनार्थम् । तस्मात् "सोऽयमिति सूक्तं निगमयेत्" इत्यत्र यद्यपि निगदचोदना, तथाप्युक्ता निगदधर्मा न भवन्त्येव । तस्माच्चत्र त्रैस्वर्येणाप्रणवं सूक्तं वक्तव्यम् ॥

वेदमस्मै प्रयच्छत्यध्वर्युः ॥ २ ॥

अध्वर्युग्रहणमुत्तरसूत्रार्थम् । "तं गृह्णीयात्" इत्यत्राध्वर्युणा दीयमानमेव गृह्णीयात्, न प्रतिप्रस्थात्रेति वरुणप्रघासेषु प्रयोजयति । "अध्वर्योर्वेदं गृह्णाति" इति श्रुतेश्च वरुणप्रघासादिषु न प्रतिप्रस्थात्रा दीयमानं गृह्णीयात् ।

केचित् प्रतिप्रस्थात्रा दीयमानमपि गृह्णन्ति, ग्रहणमन्त्रेऽपि द्विवचनोहं कुर्वन्ति । तथा "वेदं पत्न्यै प्रदाय" इत्यत्रापि वेदद्वयं प्रदाय मन्त्रस्योहं कुर्वन्ति । अत्रोहं वक्ष्यामः । "वेदौ स्थो वेदौ विदेय" इति वाचनमन्त्रे "वेदौ स्थो वित्ती स्थो विदेय कर्मणी स्थः करणे स्थः क्रियासंसनी स्थः सनितारौ स्थः सनेयं वेदौ दत्तां वाजिनं यं बहवः कामाय वाम्" इति । अस्मिन्सूत्रेऽनारभ्यमाणोऽध्वर्युणाऽदीयमानं स्वयमेव गृह्णीयात्तन्निवृत्त्यर्थमिति[1] ॥

(१) अस्मिन् to इति omitted in $B^2$ $B^3$.

[ तं गृह्णीयाद्वेदोऽसि वेदो विदेयेति ॥ ३ ॥ ]

उदायुषेत्येतेनोपोत्थाय पश्चाद्गार्हपत्यस्याप-विश्य सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपति-मित्याज्येन यजन्ति ॥ ४ ॥

उदायुषेत्येतेनेत्यत्र एतेनेति वचनं पूर्वोक्तस्य "उदायुषा स्वायुषा" इत्यस्य मन्त्रस्य ग्रहणार्थम् । इतरथा तावतो ग्रहणं स्यात् । तन्मा भूदिति ।

आज्येनेति वचनं जाघनीप्रतिषेधार्थम् । आह । कुतो जाघन्याः प्राप्तिरिति । "जाघन्या पत्नीः संयाजयन्ति" इति श्रुतेः । आह । तन्नोपपद्यते । पशौ तद्वचनं प्रयोजयति । नेष्टिषु । तस्मादवाच्यमेतदिति । उच्यते । दर्शपूर्णमासयोरविद्यमानाया अपि पशावेव विद्यमानाया इह जाघन्याः प्रतिषेधं कुर्वन् ज्ञापयति । ऐष्टिकाश्च पाशुकाश्च तुल्याः पत्नीसंयाजा इति । तेनाग्नीषोमीये पशौ पत्नीसंयाजानामादेशः कर्त्तव्यः । आदेशस्याप्रतिषेधविषयेऽपीति[1] ।

यजन्तीति वचनं यजन्त्येव न निगमयन्तीत्यर्थः ॥

[ आप्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा इह त्वष्टारमग्रियं तन्नस्तूरीपमध पोषयित्नु

( १ ) B¹ ; प्रतिषेधविषये अस्यापीति B² ; अप्रतिषेधविषये अस्यापीति B³.

देवानां पत्नीरुशतीरवन्तु न इति द्वे अग्निर्होता गृहपतिः स राजा हव्यवाळग्निरजरः पिता न इति पत्नीसंयाजाः ॥ ५ ॥ ]

अथ प्रजाकामो राकां सिनीवालीं कूहूमिति प्राग्गृहपतेर्यजेत ॥ ६ ॥

अथशब्दो राकादीनामपि पत्नीसंयाजवदङ्गदेवतात्वज्ञापनार्थं प्रयुज्यते। इहापि यजेतेति वचनं राकादीनामपि निगमनप्रतिषेधार्थमेव ॥

राकामहं सिनीवालि कुहूमहमिति द्वे द्वे याज्यानुवाक्ये ॥ ७ ॥

याज्यानुवाक्याग्रहणं राकादीनां यत्र प्रधानदेवतात्वं तत्रापि कथमेता एव याज्यानुवाक्याः स्युरित्येतदर्थम्। यथा "धातानुमती राका सिनीवाली कुहूः" इत्येवमादिषु। एतदेव ज्ञापकम्—वचनादेतेऽङ्गदेवतानां याज्यानुवाक्याः तासामेव पुनःप्रधानभूतानां न भवन्तीति। तस्मात् "वैश्वदेव्यामग्निस्सोमः सविता" इत्यत्र सोमस्य नाज्यभागपत्नीसंयाजेषूक्ताः कर्त्तव्याः, श्यामाकेष्ट्यामुक्ते एव कर्त्तव्ये। इतरथाऽज्यभागप्रकरणे सोमस्य पूर्वमुक्ते इति कृत्वा ते एव स्यातां तन्मा भूदिति।

कुहूमहमित्येतयोरादिग्रहणं कस्मात् कुहूमहमिति पाठादेवा-

नन्तरं सिद्धिर्भवति । उच्यते । आदिग्रहणमेवाचार्यस्य कृतिः, सर्वसमाम्नायाधिकारात् । तयोः पाठस्तु नाचार्यकृतिः । किं तर्हि । येषां तु समाम्नाये एते ऋचौ न विद्येते ते न पठन्ति । इतरे[1] न पठन्ति । तेषामादिग्रहणेन सिध्यतीह । एवमुत्तरत्रापि "अग्निर्मुखम्" इत्येवमादीनामपीह दर्शनादादिग्रहणमाचार्यस्य कृतिरिति मन्तव्यम् ॥

[कुहूमहं सुवृतं विद्म नाप समस्मिन् यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम। कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधात्विति ॥ ८ ॥ ]

आज्यं पाणितलेऽवदापयीत ॥ ९ ॥

अध्वर्युप्रत्ययत्वादेव[2] सिद्धस्यापीहाज्यं पाणितलेऽवदापयीतेति वचनं नियमार्थम् । अवान्तरेडावत्स्वयमादानं न कुर्यादिति । पूर्वस्यामिडायामवान्तरेडामवदापयीतेत्यत्राध्वर्युकर्मविधानमवान्तरेडाया मार्गोपदेशार्थं कृतमन्तरेणाङ्गुष्ठमङ्गुलीश्चेति ॥

---

( १ ) B²; न added in B³; न struck out in B¹.

( २ ) B¹; अध्वर्युश्चतुर आज्यबिंदूनवद्यतीत्येतेनैव B³; अध्वर्युश्चतुर आज्यबिंदूनविद्यते तेनैव B².

## [ इळामुपहूय ] सर्वां प्राश्नीयात् ॥ १० ॥

केयमवान्तरेडा । तस्मान्मन्त्रः । कुतः । अवान्तरेडायाः सर्वप्राशनं सिद्धमेव । अथवा सर्वामिति वचममन्येषु भक्षेष्वसर्वप्राशनमपि भवतीति ज्ञापनार्थम् ॥

## शंयुवाको भवेन्न वा ॥ ११ ॥

इह सूक्तवाकमपि केचिदध्वर्यव आवर्तयन्ति । तत्र यद्यपि पत्नीसंयाजार्थं सूक्तवाकस्यावृत्तिः । तथापि प्रधानदेवतानामेवोपलक्षणं कर्त्तव्यम् । न पत्नीसंयाजदेवतानाम् । कुतः । एता यजन्त्येव न निगमयन्तीति ॥

( इति दशमी कण्डिका )



वेदं पत्न्यै प्रदाय वाचयेद्धोताध्वर्युर्वा वेदोऽसि वित्तिरसि विदेय कर्मासि करणमसि क्रियासंसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं यं बहव उपजीवन्ति यो जनानामसद्दशी। तं विदेय प्रजां विदेय कामाय त्वेति ॥ १ ॥

होतृग्रहणमध्वर्युर्वेति विधानार्थम्[1]। अध्वर्युर्वेतीहाध्वर्योः कर्मविधानं यद्यध्वर्युः वाचयति होत्रा वाचनं न[2] कर्तव्यमित्येतदर्थम् ॥

वेदशिरसा नाभिदेशमालभेत प्रजाकामा चेत् ॥२॥

नाभिदेशमिति देशग्रहणं नाभिसमीप इत्यर्थम्। प्रजाकामा चेदिति स्त्रीलिङ्गनिर्देशः कस्मात्। यद्यपि भर्ता प्रजाकामो न भवति, तथापि पत्नी स्वयमेव कामयितुं लभत इत्येतदर्थम्। चेत्शब्दादृते प्रजाकामत्वे सिद्धे, यथा "प्रजाकामः" इत्यत्रार्थादवगम्यते चेत् शब्दः, तद्वदिहापि सिद्धे पुनश्चेत्शब्दग्रहणं, यद्यपि प्रजां न कामयते तथापि प्रजनसमर्था चेत् नाभ्यालम्भनं कुर्यादिति। अथवा स्त्रीलिङ्गनिर्देशात्पत्नी स्वयमेवालभते न होतेति ॥

---

(१) विकल्पविधानार्थम् B3.

(२) न omitted in B2 B3.

**अथास्या योक्त्रं विचृतेत्प्र त्वा मुञ्चामि वरुणस्य पाशादिति ॥ ३ ॥**

अस्या इति वीप्सार्थम् । अस्या अस्या इति प्रतिपत्नीकं मन्त्रावृत्तिर्भवति । अथशब्दः कर्तृसम्बन्धार्थः । यत्राध्वर्युर्वाचयति स एव योक्त्रं विचृतेत् इति । विचृतेत् विमुञ्चति पत्नीत्यर्थः । अथवा, यत्राध्वर्युर्योक्त्रं विमुञ्चति तत्र होत्रा न विमोचनमन्त्रो वक्तव्यः ॥

**तत्प्रत्यग्गार्हपत्याद् द्विगुणं प्राक्पाशं निधायोपरिष्टादस्योदगग्राणि वेदतृणानि करोति । पुरस्तात्पूर्णपात्रं संश्लिष्टं वेदतृणैः । अभिमृश्य वाचयेत्पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठा इति ॥ ४ ॥**

अधिकारात्सिद्धेऽपि तदिति वचनं वीप्सार्थं तत्तद्योक्त्रमिति । तस्मात्सर्वेषां योक्त्राणां निधानं कर्त्तव्यमिति ।

अधिकारात्सिद्धेऽपि "उपरिष्टादस्य" इत्यत्रास्येति वचनम् "पुरस्तात्पूर्णपात्रम्" इत्यत्राप्यधिकारार्थम् । तस्माद्योक्त्रस्य पुरस्तात्पूर्णपात्रनिधानं कर्त्तव्यं न वेदतृणानां पुरस्तादिति । इतरथा

वेदतृणानि करातीत्यनन्तरत्वात्तेषां पुरस्तात्स्यात् । तन्मा भूदिति। उभावपि पूर्णपात्रमभिमृशतः । वाचयेदित्यत्रोभाभ्यां स मन्त्रो वक्तव्य इति सिद्धान्तः ॥

अथैनां पूर्णपात्रात्प्रतिदिशमुदकमुदुक्षन्नुदुक्षन्तीं वाचयति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणस्यां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा ॥ ५ ॥

"अभिमृश्य वाचयेत्" इत्यत्रेत्येनामित्यनुच्यमानेऽप्यधिकारात्सिध्यति । तथेहापि सिद्धे एनामिति वचनम् उभयोः कर्मणोरतुल्यत्वज्ञापनार्थमेव। अभिमृश्य वाचनमात्मसंस्कारत्वात्सर्वाभिः क्रियते, इदं तु परार्थत्वादेकया वा सर्वाभिर्वा कर्त्तव्यमित्येतदर्थम् ॥

अथास्या उत्तानमञ्जलिमधस्ताद्योक्त्रस्य निधायात्मनश्च सव्यं पूर्णपात्रं निनयन्वाचयेन्माहं प्रजां परासिचं या नः सयावरी स्थन । समुद्रे वो निनयानि स्वं पाथो अपोथेति ॥ ६ ॥

पुनरस्या इति वचनं पूर्वेण कर्मणास्यातुल्यत्वज्ञापनार्थमेव । इदं त्वात्मसंस्कारत्वात्सर्वाभिः क्रियत इति । इह पत्न्यामविद्यमानायां कथं प्रयोग इति वेदवाचनं न भवति । कुतः । पत्नीसंस्कारत्वात् । यद्यध्वर्युर्वाचयति तदा होतुर्न भवति । तस्मात्पत्न्या एव संस्कार इति । योक्त्राभावान्न योक्त्रविमोकः । तस्य गार्हपत्यस्य पश्चान्निधानं च भवति । वेदतृणानामेव निधानं कर्त्तव्यम् । तथा पूर्णपात्रस्य च । तत्र पूर्णमिति वाचने तु होतुश्च संस्कारो विद्यत इति मन्यामहे । "अभिमृश्य" इति होतुरभिमर्शनविधानात् । तथा मार्जनेऽपि "उदुक्षन्" इति वचनात् होतुरपि संस्कारो विद्यत इति गम्यते । तथा पूर्णपात्रनिनयने "आत्मनश्च सव्यम्" इति वचनाद्धोतुरपि संस्कारो विद्यत एव । तस्मादेतत्कर्मत्रयं कर्त्तव्यं होत्रैव ।

केचित्किञ्चिदपि नेच्छन्ति होतुः ॥

**वेदतृणान्यग्रे गृहीत्वाविधून्वन्त्सन्ततं स्तृणन्त्सव्येन गार्हपत्यादाहवनीयमेति तन्तुं तन्वन्रजसो भानुमन्विहीति ॥ ७ ॥**

स्तृणन्सव्येनेति स्तरणसमीपे सव्यस्य ग्रहणात्सव्येन स्तरणं कर्तव्यम् । एके सव्येन गृहीत्वा दक्षिणेन स्तरणं कुर्वन्ति । सव्येनेति वचनं ग्रहणार्थं कृतं मन्यन्ते । तन्नोपपद्यते । यद्येवमिष्टं स्यादेतत्सर्वं सव्यग्रहणादृतेऽपि सिध्यति । कथम् । दक्षिणस्य स्तरणे

व्यापृतत्वादर्थात्सव्येनैव ग्रहणं प्राप्नोति । तस्मात्सव्यग्रहणं न कर्तव्यमिति ।

तत्रैतत्स्यात् । "आग्नीध्रमङ्कदेशेन सव्येन वा" इत्यत्र दक्षिणस्याध्वर्य्वन्वारम्भणे व्यापृतत्वादेवाग्नीध्रस्यान्वारम्भणोऽर्थात्प्राप्नोति, सव्येनेति ब्रवीति । तद्वदिहापि वचनमिति । मैवम् । अतुल्यत्वात् । तत्राग्नीध्रमङ्कदेशेनेत्युक्त्वा सव्येनेति यदि नावक्ष्यत्, नित्यमाग्नीध्रस्याङ्कदेशेनैवान्वारम्भणं स्यात् । वा शब्दोऽन्वारम्भणस्य विकल्पार्थः स्यात् । अन्वारभेत न वेति । तद्व्युदासार्थं तत्र सव्यग्रहणम् । किञ्चान्यत् । तत्र सव्यग्रहणे त्वक्रियमाणे दक्षिणेनाध्वर्युं स्पृष्ट्वा पश्चात् दक्षिणेनाग्नीध्रमपि स्पृशेत्तन्निवृत्त्यर्थं तत्र सव्यग्रहणमिति । इह तु सव्यग्रहणं प्रयोजनादतिरिच्यत एव । किञ्चान्यत् । यदि सव्येन ग्रहणमिष्टं स्यात् वेदतृणान्यग्रेऽपि गृहीत्वा सव्येनेति तत्रैव सव्यग्रहणमकरिष्यत् । तस्मान्नायमर्थ इति ॥

शेषं निधाय प्रत्यगुदगाहवनीयादवस्थाय स्थाल्याः स्रुवेणादाय सर्वप्रायश्चित्तानि जुहुयात्स्वाहाकारान्तैर्मन्त्रैर्न चेन्मन्त्रे पठितः ॥ ८ ॥

शेषं निधायेति वचनं सर्वस्तरणं मा भूदित्येतदर्थम् । स्थाल्या इति वचनं ध्रुवाज्यनिवृत्त्यर्थम् । स्रुवेणेति वचनं जुहूनिवृत्त्यर्थम् । न चेत्पठित इत्येतावता सिद्धेऽपि मन्त्रग्रहणं कृतसमन्त्रपरिग्रहा-

र्थम् । मन्त्रस्यादौ मध्ये वा स्वाहाकारः पठितश्चेन्न पुनरन्ते स्वाहाकारः पठितव्य इति । यथा "स्वाहा वाचे । स्वाहा वाचस्पतये । अग्ने वाट् स्वाहा वाट्" इत्येवमादिषु ।

## यत्किञ्चाप्रैषियो यजेदन्यत्रापि ॥ ९ ॥

यजतिग्रहणेन होमाभ्याधाने गृह्येते । यथा "तुभ्यं ता अङ्गिरस्तमेति वाज्याहुतिं हुत्वा समारोपयेत्" इति "आहवनीये षट् षट् शकलान्यभ्यादधाति" इति "यद्वो देवाश्चकृम जिह्वया गुरु" इति चेति । तत्र तत्रापि स्वाहाकारान्तता मन्त्राणां कर्तव्येति ।

अप्रैषित इत्यनुच्यमाने याज्यायामप्यन्ते स्वाहाकारः प्राप्नोति तन्निवृत्त्यर्थमिति । अन्यत्रापीति वचनमग्निहोत्रादिष्वपि प्रापणार्थम् । इतरथा पौर्णमासातिदिष्टेष्वपीष्टिपशुसोमेष्वेव स्यात् । तन्निवृत्त्यर्थमिति ॥

## एवंभूतोऽव्यक्तहोमाभ्याधानोपस्थानानि च ॥१०॥

इहाप्यन्यत्रापीत्यनुवर्तते । एवंभूतश्रवणात् "प्रत्यगुदगाहवनीयादवस्थाय स्थाल्याः स्रुवेणादाय" इत्येतत् गृह्यते ।

अव्यक्तग्रहणं यत्र किञ्चिद्व्यक्तं किञ्चिदव्यक्तं यथा "गार्हपत्ये जुहोति" इति तत्र गार्हपत्यो व्यक्तः इतरदव्यक्तम् । तत्रापि प्रत्यगुदगाहवनीयादवस्थायेत्येतत्सर्वं ग्रहीतव्यमित्येवमर्थमव्यक्तग्रहणं क्रियते । इतरथा "गार्हपत्ये जुहोति" इत्यत्राहवनीयाभावा-

द्धोमस्य प्रत्यगुदगाहवनीयादवस्थायेत्युक्तमाहवनीयसम्बन्धत्वा-त्प्रत्यगुदगवस्थानादि न स्यात् । तन्मा भूदित्यव्यक्तग्रहणम् ॥

अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि । अयासावयसा कृतोऽयासन् हव्यमूहिषे या नो धेहि भेषजं स्वाहा । अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभिश्च भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहेति ॥ ११ ॥

व्याहृतिभिश्चेति वचनं संज्ञार्थम् । संज्ञाप्रयोजनं "व्याहृतिभिर्वा समुच्चयमेके" इत्यत्र एतासां व्यस्तसमस्तानां चतसृणामपि ग्रहणा-र्थम् । इतरथा सर्वा अपि समस्ता व्याहृतयो गृह्येत ( ?–रन् ) । तन्मा भूदिति ॥

हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रम्या-नियमः ॥ १२ ॥

हुत्वेति वचनं प्रायश्चित्तसंस्थाजपानां सम्बन्धकरणार्थम् । यत्र संस्थाजपस्तत्र सर्वप्रायश्चित्तानीति । तस्माद्दीक्षणीयादिषु संस्थाजपाभावान्न सर्वप्रायश्चित्तानीति । तथैव "संस्थाजपेनो-पतिष्ठन्ते ये येऽपवृत्तकर्माणः" इत्यत्र तु संस्थाजपस्य सम्भवात्सर्व-प्रायश्चित्तानि हुत्वा पुनरवभृथं व्रजेयुरिति च सिध्यति । आह ।

यद्येवं तत्र "पत्नीसंयाजैश्चरित्वा" इति न वक्तव्यम् । सर्वप्रायश्चित्तानि हुत्वावभृथं व्रजन्तीति वक्तव्यम् । उच्यते । एवमुच्यमाने दोषः । कथम् । वेदवाचनादि वेदस्तरणान्तं तत्र कर्म प्रसज्येत । तन्नेष्यते । तस्मात् "पत्नीसंयाजैश्चरित्वावभृथं व्रजन्ति" इत्युच्यते ।

निष्क्रम्येति विधित्सया[1] तीर्थेनेत्युच्यते । अर्थात्कर्मपरिसमाप्तौ निष्क्रमणे सिद्धेऽपि पुनरिह निष्क्रम्येति वचनं नियमार्थम् । निष्क्रम्यानियमः कथं स्यान्नानिष्क्रान्त इति । इतरथा विहारं प्रविष्टस्य कर्ममध्ये जननिमित्तं वान्यद्वाशौचं यद्युपपद्यते ततोऽशुचिरिति कृत्वा कर्मणो निवर्त्तेत । तन्मा भूदिति । यदर्थं विहारं प्रपन्नस्तत्कर्म परिसमाप्यैवाप्रयतः स्यान्न कर्ममध्ये । इत्येतदर्थम् ॥

[ आं च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नम इति संस्थाजपः ॥ १३ ॥ ]

इति होतुः ॥ १४ ॥

एवं नियमार्थमुच्यते । होतुरेव कर्म परिसमाप्तम् । न दर्शपूर्णमासौ परिसमाप्ताविति । तस्माद् ब्रह्मणोऽपि दर्शपूर्णमासयोरेव कर्म वक्ष्यत इति सिध्यति । इतरथा "दर्शपूर्णमासयोर्हविःष्वासन्नेषु

(१) विधित्सया $B^2$; विधिवत्तथा $B^1$. There is a big lacuna here in $B^3$.

होतामन्त्रितः" इति दर्शपूर्णमासयोर्होतुश्च एकवाक्यनिर्दिष्टत्वाद्धो-त्रधिकारे निवृत्ते दर्शपूर्णमासस्यापि निवृत्तिः स्यात् । तन्मा भू-दित्येतदारभ्यते ॥

( इत्येकादशी कण्डिका )



अथ ब्रह्मणः ॥ १ ॥

अथ शब्दोऽधिकारार्थः। इत उत्तरं यद्वक्ष्यति तद् ब्रह्मण इति वेदितव्यम् ॥

होत्राचमनयज्ञोपवीतशौचानि ॥ २ ॥

आचमनयज्ञोपवीते होतुर्विहिते कर्माङ्गभूते ब्रह्मणोऽपि विधीयेते। शौचग्रहणं तु क्रियते सूक्ष्मशौचार्थम्। जननिमित्तमाशौचं कथं न स्यादित्येतदर्थम्। इतरथा "शौचमृ[1]त्विग्दीक्षितब्रह्मचारिणामिति स्मृतम्" इति वचनादा क्रतोरपवर्गाज्जननवत्स्यादित्येतदर्थं शौचग्रहणम्। इत्येतस्य सूक्ष्मशौचस्य पूर्वं होतुरसिद्धस्यापि सिद्धवद्धोत्रादेशं[2] कुर्वन् ज्ञापयति। सर्वेषामृत्विजामिदं शौचग्रहणं सामान्यमिति। किन्तु विहारं प्रतिपन्नस्यारब्धकर्मणः आतीर्थनिष्क्रमणादाशौचं न भवतीति प्रागुक्तम् ॥

नित्यः सर्वकर्मणां दक्षिणतो ध्रुवाणां व्रजतां वा ॥३॥

कर्मान्तरालेऽत्विक्तु नियत[3] इत्येतदर्थं नित्यग्रहणम्। पाकयज्ञेष्वपि प्रापणार्थं सर्वग्रहणम्। सर्वकर्मणामित्येव सिद्धेऽपि ध्रुवाणां व्रजतां वेति बहुषु व्रजत्स्वपि यद्येको न व्रजेद्यथाहोपविशत्यध्वर्युं (?)

---

(१) शौचमृ-B²; शौचमनृ-B¹; omitted in B³.

(२) होत्रादेशं B¹; होत्रातिदेशं B²; omitted in B³.

(३) कर्मान्तराले वृत्तित्विनुन्तायत (?) B².

न व्रजति[1] तत्रापि ब्रह्मणा न व्रजितव्यमित्येतदर्थम् । ध्रुवाणां व्रजतां वेति ध्रुवग्रहणस्य पूर्वनिपातनमृत्विजां तत्र ध्रुवत्वमेव भवति ।

तत्रैतत्स्यात् । प्रवर्ग्यादौ सर्वे गार्हपत्यसमीपदेश उपविशन्ति, पुनर्यागकाले अध्वर्युप्रभृतय आहवनीयसमीपं व्रजन्ति । प्रस्तोता गार्हपत्यसमीप एवोपविशति । तस्य ध्रुवत्वाद् ब्रह्मणो व्रजनं न स्यात् । तच्च नेष्यते । इष्यते च ब्रह्मणोऽप्याहवनीयसमीपे व्रजनमिति । तन्नायमर्थ इति । उच्येत । नैष दोषः । प्रस्तोतर्त्विन्नु न गण्यते । तस्मात्तस्य ध्रुवत्वे आदरो न कर्त्तव्यः । तस्माद् ब्रह्माप्याहवनीयसमीपं व्रजत्येव ॥

## बहिर्वेदि यां दिशं व्रजेयुः सैव तत्र प्राची ॥४॥

बहिर्वेदि बहिर्विहारादित्यर्थः । यथा(१दा) दक्षिणामुखा गच्छेयुः तदा ब्रह्मा प्रतीच्यां भवति । यदा प्रत्यङ्मुखास्तदोदीच्यामिति । सोमप्रवहणाद्युदाहरणम् । सैवेत्येवकारवचनं प्रसङ्गेनापि लोकप्रसिद्धा प्राची तत्र मा भूदिति । अथवैवकारवचनं बहिर्वेदिगतानामप्यृत्विजां सैव तत्र प्राची कथं स्यादित्येतदर्थम् । तेन किं सिद्धं भवति । "पत्नीसंयाजैश्चरित्वावभृथं व्रजन्ति" इत्यत्र "अवभृथेष्ट्या तिष्ठन्तश्चरन्ति" इत्यत्र यां दिशमभिमुखा व्रजन्ति तामेव दिशमभिमुखैरिष्टिश्च कर्त्तव्येति ॥

---

(१) B[1]; यथाहोपविनत्यध्वर्यु व्रजति B[2]; lacuna in B[3].

## चेष्टास्वमन्त्रासु स्थानासनयोर्विकल्पः ॥५॥

अस्योदाहरणं 'ब्रह्मौदनस्य पचन'[1] इति मन्त्रवान्स्यादिति बौधायनः । तूष्णीक इति शालीकिः" ( बौ० श्रौ० सू० २०।१६ ) इत्येवमादि । स्थानमासनं वेति लघुना सिद्धेऽपि विकल्प इति वचनम् एकस्मिन्नेव तन्त्रे यद्यमन्त्रा[2] बहवश्चेष्टाः स्युस्तत्रान्यतरस्यामासनमन्यतरस्यां स्थानं कर्तुं लभत इत्येतदर्थं विकल्प इति वचनम् ॥

## [ तिष्ठद्धोमाश्च येऽवषट्काराः ॥ ६ ॥ ]

## आसीतान्यत्र समस्तपाण्यङ्गुष्ठः ॥ ७ ॥

"आसनं वा सर्वत्र" इत्यासने सिद्धेऽपि पुनरिहासीतेति वचनमचोदितेष्वप्यासनेषु ब्रह्मणो निरसनोपवेशनार्थम् । यथा । अग्न्याधेये ब्रह्मौदनस्य पचनवेलायामुपवेशने । तथोखासम्भरणे । तथा प्रवर्ग्यसम्भरणे । तथा घर्मादिष्वपि[3] पाकयज्ञेष्वप्युपवेशने निरसनोपवेशने कर्त्तव्ये इति । तथैव पशौ संस्थाजपेनोपस्थाय निष्क्रान्तः पुनः पूर्णाहुतिवेलायामुपवेशने निरसनोपवेशने करोति । यत्र तु सर्वेषां साधारणं कर्म विधीयते यथा "चात्वाले मार्जयन्त" इति तत्र निरसनोपवेशने न[4] भवतः ।

---

( १ ) मन्त्रामन्त्र ( for पचन ) in the ed. of Caland.

( २ ) यद्यमन्त्रा $B^2$; यद्यमं $B^1$; lacuna in $B^3$.

( ३ ) घर्मादिष्वपि $B^2$ $B^3$; दर्शादिष्वपि $B^1$.

( ४ ) न omitted in $B^1$.

इहाङ्गुष्ठग्रहणाद् दक्षिणोत्तरपाणीसम्बन्धं यत्र तत्राङ्गुष्ठो-
नियमः [१] ( १=दक्षिणोत्तरपाणिसम्बन्धो यत्र तत्राङ्गुष्ठानियमः ) ॥

**अग्रेणाहवनीयं परीत्य दक्षिणतः कुशेषूपविशेत् ॥ ८ ॥**

"नित्यः सर्वकर्मणां दाक्षिणतः" इति ब्रह्मणो दक्षिणभागे सिद्धेऽपि इह दक्षिणतोग्रहणं दर्शपूर्णमासयोराहवनीयस्य दक्षिणत एवोपविशेदित्येतदर्थम् । इतरथा पत्नीसंयाजेषु गार्हपत्यस्य दक्षिणत उपवेशनं स्यात् । "नित्यः सर्वकर्मणां दाक्षिणतः" इति । तन्मा भूदिति ॥

**बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपायेत्युपविश्य जपेत् ॥ ९ ॥**

विधानक्रमादेवोपविश्य जपेदिति सिद्धेऽप्युपविश्य जपेदिति वचनमुत्तरसूत्रार्थम् । प्रवर्ग्यादिष्वप्युपवेशनादनन्तरमेव ब्रह्मजपः कर्त्तव्य इत्येतदर्थम् । इतरथा तत्रैष्टिकस्य तन्त्रस्याप्राप्तत्वात्कालो न ज्ञायेत ब्रह्मजपस्य । तन्मा भूदिति । अथत्रोपविश्येति वचनमुपवेशनाभावादवभृथेष्ट्यां मा भूद् ब्रह्मजप इत्येतदर्थम् ॥

---

( ५ ) B[3]; दक्षिणोत्तरपाणी सम्बन्धयत्यत्राङ्गुष्ठोनियमः B[2]; दक्षिणोत्तरौ पाणां सम्बं(?)धायेत्यत्रांगुष्ठानियमः B[1].

## एष ब्रह्मजपः सर्वयज्ञतन्त्रेषु ॥ १० ॥

एष ब्रह्मजप इत्यस्य ब्रह्मजपसंज्ञा क्रियते । संज्ञाप्रयोजनं "न तु सौमिके प्रणयने ब्रह्मजपः" इत्यत्रास्याग्रहणमिति । इतरथास्य ब्रह्मजपसंज्ञायामक्रियमाणायां तत्र "आशुः शिशानः" इत्यस्यापि प्रतिषेधः स्यात् । कुतः "दक्षिणतश्च व्रजन् जपति" इति विधानात् । तन्मा भूदिति ।

सर्वग्रहणं[1] पाकयज्ञेष्वपि प्रापणार्थम् । अथवा सर्वग्रहणं तन्त्रविशेषणार्थम् । यत्र यत्र प्रधानाङ्गसमवायस्तत्र तत्रेति । इतरथा "तन्त्रस्य तन्त्राम्नातत्वात्" इति च, "इति पशुतन्त्रम्" इति च तन्त्रशब्दितेष्वेव[2] स्यात्तन्मा भूदिति ।

यज्ञग्रहणं जुहोतितन्त्रे मा भूदिति । यथा वाजपेयेनुमतादि । तन्त्रग्रहणं यत्र प्रधानाङ्गसमवायस्तत्रैव कथं स्यादिति । यथा घर्मादिषु । तस्मात्पौर्णादर्वे "यदि होतारं चोदयेयुस्तस्य याज्यानुवाक्ये" इति यजतिपक्षेऽपि तन्त्रस्याभावान्न ब्रह्मजपः । घर्मादिषु प्रधानाङ्गसमवायाद् भवति ब्रह्मजपः ॥

## साग्नौ यत्रोपवेशनम् ॥ ११ ॥

अग्निना सार्द्धं यत्रोपवेशनं तत्र च ब्रह्मजपो भवति । अग्नि-

---

( १ ) सर्वयज्ञग्रहणं B[1].

( २ ) तन्त्रशब्दितेऽप्येव B[1].

